चैतन्यं पुरुषधर्मः, सुखादि महत इत्यत्र विनिगमनाविरहात्। किं च महन्नित्यमनित्यं वा ? नाद्यः, मोक्षाभावापत्तेः नान्त्यः संसारानादित्वभङ्गापत्तेः यत्तु अचेतनप्रकृतिकार्यत्वान्महदप्यचेतनमिति, तन्न; तत्कार्यत्वासिद्धेः। अजापदं तु कर्तृ पुरुषशक्तिपरम्। सात्त्विक-राजस तामसकर्मानुकूला सा च लोहितादिपदैर्व्यपदिश्यते। बह्वीमित्यादिना कार्यानुकूल्यमुक्तम्। प्रजेति कार्यमात्रोपलक्षकं, सरूपां शक्त्याऽनुरूपाम्। जुषमाणः कार्ये भूयो व्यासक्तः। अनुशेते तप्यति। एनामेतत्प्रयुक्तं कार्यम्। भुक्तभोगां—कृतकार्याम्। जहाति त्यजति, मुच्यत इति यावत्। भगवद्गीतास्थप्रकृतिपदं त्वदृष्टपरम्। तद्गुणाः ज्ञानेच्छाकृतयः। अदृष्टनिरपेक्षोऽहमेव कर्तेत्यर्थ इति दिक्। तत्र च सामान्यगुणः संयोगः। ज्ञानसुखे दुःखेच्छाद्वेषप्रयत्ना विशेषगुणाः परमात्मा तु श्रुत्यैव सिध्यति।

क्षित्यादिकं सकर्तृकं कार्यत्वात्, घटवदिति त्वप्रयोजकम्। अनुमानानुकूला "विश्वतश्चक्षुः" "सहस्रशीर्षा" इत्यादि श्रुतयस्तु शरीरमपि साधयेयुः। भवदभिमतज्ञानेच्छाकृतिवत्तदपि नित्यं स्यात्, कर्तृत्वस्य शरीरव्याप्यत्वाच्च, एवं व्यापारोऽपि सिध्येत्कर्तृत्वस्य तदाश्रयत्वात्। अतएव विप्र-क्षत्रिय-विट्-शूद्राणां कर्मविधिः। चैत्रः करोतीति च प्रतीतिः संगच्छते। विप्रत्वचैत्रत्वादीनां शरीरमात्रनिष्ठत्वात्। विप्रादिभिश्चेतनलक्षणेति चेत्स्यात्सा। यदि चेतनमात्रे क्वचिदपि कर्तृव्यवहारः स्यात्, न तु सोऽस्ति; किन्तु चेतनोपहितदेहे। एतेनाकर्तुरेवामुष्मिकफलप्रसङ्ग इत्यपास्तम्। कृत्रापि स एव वाच्यो, न तु यत्नमात्रम्। यतमानेऽपि वातजडदेहे तस्याप्रयोगात्। अयतमानेऽपि कृताधिश्रयणादिव्यापारादिमति लडन्ततत्प्रयोगाच्च। विस्तृतं चैदमस्मत्कृतौ वादोद्योते। व्यापारानङ्गीकारेण यत्नमात्राङ्गीकारे तु कर्तृत्वस्य तन्मात्राश्रयत्वेन ज्ञानेच्छे अपि न सिध्येयाताम्। किं च सर्वज्ञतया ईश्वरज्ञानवन्तोऽन्येऽपि बहवः सर्वज्ञाः स्युः अज्ञातसर्वेण सर्वज्ञस्य ज्ञातुमशक्तेः। विशेषणज्ञानायत्तत्वाद्विशिष्टज्ञानस्य। यथोचुर्भट्टपादाः—

'कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते।' इति श्लो० १-२-१३५।

यत्तु 'परमाणवः कस्यापि प्रत्यक्षाः, प्रमेयत्वात्, घटवत्' इति तन्न; प्रमेयत्वस्य प्रत्यक्षत्वव्याप्यत्वाभावेन हेतोरप्रयोजकत्वात्। अन्यथा प्रत्यक्षैकप्रमाणवादिचार्वाकविजयापत्तिः, आश्रयासिद्धेश्च। त्रुटेः पक्षत्वे त्वस्मदादिभिरर्थान्तरता। परमाणवो न

कस्यापि प्रत्यक्षाः प्रत्यक्षताप्रयोजकधर्माभावादिति सत्प्रतिपक्षसंभाच्च। 'यः सर्वज्ञः सः सर्ववित्' इत्यादिश्रुतयस्तु उपासनाकांक्षितस्य प्रसिद्धस्यैव जगतः कर्तेति प्रकार-विशेषमात्रस्य प्रापणपराः। 'योषा वाव गोतमाग्नि' 'अन्नं ब्रह्मेत्युपासीते' त्यादिवत् स्वार्थपरत्वे निष्प्रयोजकत्वेनाप्रामाण्यापत्तेः। एतद्वाक्यार्थविदोऽन्यस्यापि सर्वज्ञत्वा-पत्तेः सर्वगोचरप्रत्यक्षवत्त्वादीश्वरोऽन्यमपेक्ष्य विशिष्यत इति चेन्न; प्रत्यक्षसामग्र्या वाधात्। नित्यमेव तदास्त्विति चेन्न; इन्द्रियजन्यतावच्छेदकत्वस्य प्रत्यक्ष-त्वस्य वाधात्। तदवच्छेदकं जन्यप्रत्यक्षत्वमेवेति चेन्न; तदतिरिक्तस्य प्रत्यक्षत्वे मानाभावात्। जन्यचाक्षुषत्वस्यैव चक्षुर्जन्यतावच्छेदकत्वान्नित्यचाक्षुषत्वापत्तेश्च। एतेन जन्यज्ञानत्वमेव शरीरात्ममनः संयोगजन्यतावच्छेदकमित्यपास्तम्। यदि तु पर्वत-महानसीयधूमवह्न्योर्विशिष्य सहचारग्रहेऽपि यथा लाघवाद् धूमत्व-वह्नित्व-सामान्य-धर्मपुरस्कारेणैव व्याप्तिग्रहस्तथा घटकुलालादीनां विशिष्यान्वयव्यतिरेकदर्शनेऽपि लाघवात्कर्तृत्वकार्यत्वसामान्यधर्मावच्छेदेनैव कार्यकारणभावो गृह्येत, तदा ज्ञानेच्छा-कृतीनामपि लघुधर्मावच्छेदेनैव असौ स्याज्जन्यत्वप्रवेशे गौरवात्। अन्यथा नित्यं शरीर-मपि विभुनि स्पर्शं कल्प्येत, तत्त्वं तु जातिविशेषः सुखदुःखसाक्षात्कारावच्छेदकत्व-मिन्द्रियाश्रयत्वं वा। अतो घटत्वेन कुलालत्वेन, पटत्वेन कुविन्दत्वेन चावश्यकवि-शेषकार्यकारणभावैरेव सिद्धौ कार्यत्वकर्तृत्वसामान्यधर्मावच्छेदेन कार्यकारणभावे मानाभावः तत्तद्घटत्वेन तत्तद्दण्डत्वेन विशिष्य कार्यकारणभावसत्वेऽपि सामान्यतो घटार्थिनो दण्डमात्रोपादित्सादर्शनात् घटत्वदण्डत्वादिसामान्यधर्मावच्छेदेनाप्यपरः कल्प्यते। इह तु कार्यमात्रार्थिनः कर्तृमात्रोपादित्साभावान्न तथा। यद्यपि सामान्य-कार्यकारणभाव आग्रहस्तथाप्यपरोक्षज्ञानत्वादिनैवास्तु न तु ज्ञानाद्याश्रयत्वेन गौरवात्। तादृशं च ज्ञानं निराश्रयमेवास्तु। जन्यज्ञानवन्नित्यज्ञानस्याश्रयापेक्षा-भावात्। गुणत्वाद्गुण्यपेक्षेति चेन्न; अप्रयोजकत्वात्। व्याप्तिस्तु जन्यत्वप्रयुक्ता एव। चिकीर्षाकृती अपि स्वतन्त्रे एव सिध्येयाताम्। खण्डक्ष्माकर्तृत्वेनेश्वरसिद्धिरिति चेन्न; तदुपादानकूटस्यैव कर्तृत्वोपपत्तेः। अचेतनस्याप्यस्य ज्ञानेच्छाकृतिमत्त्वा-भावेऽपि क्रियामात्राश्रयत्वेनैवोपपद्यते कर्तृता। एव ञ्च विप्रादीनां कर्मविधिः, चैत्रः कर्तेति च प्रतीतेरुपपत्तिरित्युक्तं प्राक्। अस्मत्कृतौ वादोद्योते विस्तृत ञ्च।

खण्डपटे तु महापट इव कुविन्द एव कर्ता नेश्वरः। महापटखण्डपटयोर्भेदा-भावात्। स एवायं पटो महान् जात इति प्रतीतेः, पूर्वपरिमाणमेव तु नष्टं, परिमाणान्तरं चोत्पन्नम्। न तु पटोऽपि, पटो नष्ट इत्यप्रतीतेः। 'अल्पपटो नष्ट' इति प्रतीतिस्तु

'शिखी ध्वस्त' 'स्वर्गी ध्वस्त' इतिवद्विशेषणमात्रध्वंसायत्ता तव। मम तु विशिष्ट-ध्वंसायत्ता तस्यातिरेकात्; विशेष्यं तु तदेवास्ते । 'महापट उत्पन्न' इति धीस्तु परिमाणान्तरध्वंसं तदात्मनोत्पत्तिं वा गोचरयति ।

किं चोपादानगोचरापरोक्षज्ञानाद्याश्रयत्वेनेश्वरे साध्यमानेऽनन्तपरमाण्वादि-गोचराण्यनन्तान्येव ज्ञानानि स्युर्नैकम्। लाघवादेकत्वोक्तावपि न, तावद्गोचरमेव स्यान्न सर्वगोचरमिति सर्वज्ञत्वासिद्धिः। सामान्यलक्षणया सर्वगोचरत्वोक्तौ त्व-स्मदादीनामपि तथात्वापत्तिः। जीवस्य न तत्तद्धर्मप्रकारकं तत्, ईश्वरस्य तु तत्तथेति चेन्न; मानाभावात् । यावत्प्रकारतां विना कर्तृत्वमनुपपन्नं, तावत् प्रकारकमेव सिध्ये-त्तत्सर्वप्रकारकम्। किं च, प्रकारताप्यस्मदादिज्ञानेन तत्तज्ज्ञानव्यक्तिविशेषगोचरी-भूतधर्मविशेषत्वमेव। न च सा एकस्मिन्ज्ञाने संभवति। अतो नैकज्ञानसिद्धिः। प्रवर्तकज्ञानानां सप्रकारकत्वनियमेन सप्रकारकाणां कार्यजनकज्ञानानामप्यने-कत्वापत्तिः ।

यत्तु वाचस्पतिमिश्राः, तत्तत्कारणविशेषायत्तो ज्ञाने विषयनियम इति नित्ये तदभावात्तदनियतविषयमेवेत्याहुः , तन्न; एवं सति नित्यज्ञाने कारणविशेषकृत-विषयव्यवस्थाव्यावृत्त्या सर्वत्र सर्वप्रकारतापत्त्या भ्रमोऽपीश्वरे स्यात् । भ्रमस्य दोषायत्तत्वादभावान्नायमिति चेत्; एवं चेत्तत्सप्रकारताया अपि कारणायत्तत्वाद्भ्रम-प्रमात्वानास्कन्दितं निष्प्रकारकमेव तत्स्यात् ।

नव्यास्तु, जन्यज्ञानस्य तत्तद्विशेषविषयत्वं तत्तत्कारणविशेषायत्तम्। तदभा-वात्तु तदन्यविषयत्वाभावः । नित्यस्य तु विषयव्यवस्थाकारणाभावात्सर्वविषयता-दोषाभावात्तु तत्प्रयोज्यभ्रमत्वाभाव इत्याहुः ।

तन्न ; ज्ञानस्यानियतविषयतया सर्वविषयत्वोक्तौ सर्वज्ञसाधने सामान्यलक्षणया सर्वज्ञानवता चैत्रादिनाऽर्थान्तरापत्तेः। सर्वप्रकारकज्ञानवत्त्वे तु मानाभावः ।

यत्तु केचित्, ज्ञानस्वरूप आत्मा शरीरेन्द्रियैरावृतो यत्किञ्चिज्ज्ञानात्मनाऽवतिष्ठते तदपगमे तु सर्वज्ञानरूप इति मुक्तस्य सर्वज्ञत्वमाहुः। तत्रापि मानाभावः। प्रत्युत तदानीमात्मातिरिक्तसर्वप्रपञ्चविलयेन विषयस्यैवाभावः । भावेऽपि तेन सह सम्बन्धा-भावात्कुतस्तज्ज्ञानम् ? कुतस्तरां च सर्वज्ञता ? ज्ञानस्वरूपस्य न सम्बन्धान्तरा-पेक्षेति चेन्न; ज्ञानस्वरूपत्वे मानाभावात्। 'विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतेः पूर्वमुक्तैव

गतिः। सत्यपि श्रुत्या ज्ञानस्वरूपत्वावगमे श्रुत्यैव निःसंगताऽप्यवगतेति कथं सर्व-गोचरज्ञानस्वरूपतोक्तिः। अतः श्रुत्यैव निर्गुण उपास्यतया सिध्यति भगवान्। तथा च कर्त्रधिकरणे भट्टपादाः।

"तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रितः।
इज्यते वारिणा नित्यं यः खं ब्रह्मे ति शब्दितः॥" इति॥

तदेवं 'का काचविक्रेतुश्चिन्ता, मणिमूल्यचिन्तेति न्यायेन किमस्मदाद्यनु-मान-दूषण-भूषण चिन्तनेन ?। सर्वथा तावत् सर्वशक्तिज्ञानानन्दात्मा तद्वान्वा भगवाननेकश्रुतिस्मृतिभिराराध्यतयाऽवगम्यते इति। निर्विवादा च तदाराधकानां मोक्षावधि फलप्राप्तिरपि। सर्वज्ञानसुखज(नक)तदाराध्यत्वादिभिस्तन्माहात्म्यसिद्धा-वपि न जगत्कर्तृत्वं विना तत्सिद्धिरित्याग्रहे तु तादृशशक्तिमत्त्वेनैव तत्सिध्यतु। लोकेऽपि हि महत्कार्यानुकूलशक्त्यवगमादेव महत्त्वावगतिः। अत्याग्रहे तु फलोपहि-तायामपि तस्यां न काचित्क्षतिः। सर्वथा तावच्छब्दब्रह्मणि निष्णात' इत्यादिवाक्या-द्वेदस्याकाशादिवद्भगवच्छरीरतया नित्यत्वमव्याहतमिति दिक्॥

## मनोऽधिकारः

विशेषगुणानधिकरणमिन्द्रियं मनः। विशेषगुणासमानाधिकरणवेगरूप-संस्कारवत्तादृशसंस्कारसमानाधिकरणजातिमत्। ज्ञानासमवायिकारणसंयोगाधार-वत्। आत्मतद्गुणप्रत्यक्षकरणत्ववद्वा। मनस्त्वजातेरपि सुखादिसाक्षात्कारकरणता-वच्छेदकतया सिद्धिः। अत एवात्मविशेषगुणसुखादिप्रत्यक्षान्यथानुपपत्त्या च तत्सिद्धिः। ज्ञानमात्रस्येन्द्रियजन्यत्वनियमादिति मिश्राः। एतत्संयुक्तमेव चेन्द्रियं ज्ञानं जनयति। तेन न युगपच्चाक्षुषस्पार्शनज्ञानोत्पत्तिः। युगपद्रूपस्पर्शादयो गृहीता इति शताद्यव-धानिनां त्वेककालीनशतपत्रभेदवद्भ्रमः। मनसोऽभ्यासविशेषप्रेरणादिवेगवत्तया तत्तदिन्द्रियसंयोगजन्यतत्तज्ज्ञानपौर्वापर्यानाकलनात्। अत एव नृत्यदर्शनव्यासक्तेन मया भवदुक्तं न श्रुतमिति व्यवहारः संगच्छते। अत एव चेदमणुपरिमाणम्।

अत एव यन्मनो विभु, निस्पर्शद्रव्यत्वात्, आकाशवत्। न चैवमात्ममनसोः कर्माभावेन संयोगानुपपत्ति, अजस्य तस्योपपत्तेः। घटस्योत्पत्त्यव्यवहितोत्तरक्षणस्या-काशसंयोगे कर्मजन्यत्वव्यभिचाराच्चेत्याहुः, तदप्यपास्तम्। तथा देहपरिमितत्वमपि। अनन्तावयवतत्संयोगतन्नाशकल्पने गौरवाच्च। एवमौपनिषदोक्तं जलूकावत्संकोच-विकाशशालि तैजसमिन्द्रियान्तरेण संयुज्य तद्द्वाराऽर्थग्राहकमित्यपि।

मिश्रास्तु पृथिव्यादिपरमाणूनामेवान्यतमात्कं तेभ्योऽन्यद्वाऽस्त्विति, अन्यमनस्कस्य सत्संप्रयोगेष्वपि रूपादिषु ज्ञानानुत्पत्तेरित्याहुः। अन्यतमत्वेऽपि उदितमात्रसूर्यादिरश्मीनां झटित्यतिदूरगमनदर्शनेन तेजस्यतिवेगक्लृप्तेः 'स्तैजसमेव मन' इति निष्कर्षः।

नव्यास्तु, परिमाणे मानाभावादपरिमितमेव मनः। अत एव पृथिव्यादिचतुर्भ्योऽतिरिच्यते तत्; तथाऽऽकाशादित्रयादपि। सुखादिसाक्षात्कारकारणतावच्छेदिकाया मनस्त्वजातेरेकमात्रवृत्तित्वायोगात्। आत्मवद् विभु चेदम्। तदाहुर्भट्टपादाः—

'अनवच्छिन्नसद्भावं वस्तु यत्कालदेशतः।<br>तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुतेष्यते ॥' इति।

सर्वत्र कार्यावगत्यात्मवन्मनोऽपि विभु सेत्स्यति। कर्तृकरणयोरेककार्यत्वात्। युगपज्ज्ञानानुपपत्त्या मनोऽणु चेदात्मापि स्यात्। कथं तर्हि सर्वदा सर्वकार्योपपत्तिं वारयेथा इति चेत् योग्यस्य विषयेन्द्रियसंयोगस्याभावादित्यवेहि। तदवच्छेदकश्च शक्तिविशेष एव। अत एव संनिकर्षेष्वनंतविशेषकल्पनमप्यपास्तम्। तादृशशक्त्यभावादेव च संयुक्तमपि किंचिच्चक्षुरादि न गृह्णातीत्युपपद्यते। सा च शक्तिः फलबलकल्प्या। अत एव स्पष्टं मनो वैभवमन्यत्राहुः आत्मवन्मनसोऽपि नित्यत्वात्सर्वगतत्वाच्चेति। अत दीर्घशष्कुलीभक्षणादौ पंचेन्द्रियजन्यज्ञानयौगपद्यग्रहः प्रमैवक्रामिकत्वे तु तेषां मानाभावः।

'संकोचविकाशशालि मध्यमपरिमाणं' इति मते तु उत्पत्तिनाशानंतावयवक्रियादिकल्पनेऽतिगौरवम्। व्यासङ्गेषु युगपज्ज्ञनानुत्पत्तिस्तु तादृशशक्तिरूपयोग्यताभावादेवोपपन्ना। मनोगुणत्वमतेऽपि श्रोत्रादिज्ञानकाले त्वाचज्ञानानुत्पादाय सन्निकर्षे विशेषस्यावश्यकत्वादन्येन्द्रियसंचारनिरोधेन श्रोत्रादिमात्रसंचाराद्बुभुत्सितस्यैव शब्दादेर्ग्रहो नान्यस्येति तु तत्कालीनश्रोत्रमनःसंयोगे फलबलकल्प्यशक्तिविशेषादेवापास्तम्। प्रतीतिविरोधाच्च।

पंचभूतगुणग्राहकत्वात्पांचभौतिकं मन इति त्वप्रयोजकम्। न च यद्यज्जातीयगुणग्राहकं तत्तज्जातीयगुणवदिति व्याप्तिः। वर्णस्य गुणत्वासिद्धेः; वायुगुणस्यापि ध्वनेः श्रोत्रग्राह्यत्वाच्च। इदञ्च संयोगमात्रगुणकमिति दिक्।

## शब्दाधिकारः

श्रोत्रग्राह्यः शब्दः। स द्वेधा, वर्णो ध्वनिश्च। वर्णस्तु नित्यो विभुश्च, सोऽयं गकार इति प्रत्यभिज्ञानात् उत्पन्नो नष्ट इति तु भ्रमः। नन्वेतत्प्रतीतिद्वयभ्रमकल्पनात एका प्रत्यभिज्ञैव गत्वावच्छिन्नभेदाभावकृता। सोऽयमिति तु वृत्तित्वावच्छिन्नाभिन्नत्वकृतं गकार इत्यत्र गत्वे जातित्वस्य, गकारवृत्तित्वस्य चानवगाहः, तेनेयं भ्रम इति चेन्न; अनंतव्यक्तितदुत्पत्तिक्रियानाशकल्पनातो द्वयभ्रमकल्पनाया युक्तत्वात्। किञ्च दूरस्थशंखावच्छिन्नाकाशप्रदेश उत्पन्नशब्दग्रहे वीचीतरङ्गन्यायेनानन्ताः शब्दाः कल्प्याः। तेन चैव शब्दश्रवणेन चैत्रानुमानं न स्यात्। पारम्पर्यजन्येऽपि चैत्रजन्यत्वाभावात्। तस्मिंश्चैत्रस्य प्रयोजकत्वादेव तदनुमानमिति चेन्न; चैत्रशब्दं श्रुत्वा मैत्रानुदितादपि शब्दाच्चैत्रानुमानप्रसङ्गात्। चैत्रस्य तस्मिन्नपि प्रयोजकत्वात्। चैत्रजन्यशब्दपरम्परायां व्यावर्तिका जातिरस्त्विति चेन्न; अपरिमितानामनित्यानां तेषां नित्यजात्या संबन्धायोगात्।

अस्मन्मते तु चैत्रध्वनिनैव चैत्रानुमानं, न तु वीचिन्यायेन; तेन केन वा तेष्वेका जातिः। सोऽयं गकार इत्येकां प्रतीतिमपेक्ष्य नाशोत्पत्तिप्रतीतिद्वयप्रमात्वरक्षणस्य युक्तत्वेन फलमुखमेतद्गौरवमिति चेत्तवापि 'पञ्चाशदकारादयो वर्णा' इत्यत्र तद्विभाजकधर्मवल्लक्षणाकल्पनया दोषसाम्यात्। तस्मान्नित्यसवर्णः। अत एवायं विभुर्द्रव्यं च। तथाहि वर्णो द्रव्यं साक्षात्संबन्धेनेन्द्रियग्राह्यत्वात्, निराश्रयत्वाद्वा, आत्मवत्। अनुभूयते हि वर्णो विनैवाश्रयम्। गुणत्वमाश्रयकल्पकं चेन्न; असिद्धेः न चानुमानमप्रयोजकम्; विनैवाश्रयकल्पनमुपपत्तौ तत्कल्पकाभावात्। न च शब्दस्य नीरूपत्वेन बहिरिन्द्रियाग्राह्यापत्तिः। वायोस्तथा ग्राह्यत्वदर्शनात्। वायोः स्पर्शमात्रं गृह्यते नासाविति चेन्न; वायुं स्पृशामि साक्षात्करोमीति प्रतीतेः। रूपस्पर्शमात्रग्रहणेन घटादेरप्यग्रहापत्तेरित्युक्तं प्राक्।

ध्वनिस्तु 'वायवीयाः संयोगविशेषा एव ध्वनय' इति भाष्यान्न शबरस्वामिनस्संमतः। 'सोऽप्यशक्यापलाप' इति त्वाचार्याः। स तु नादाख्यो वायोर्गुणः। अत एव संयुक्तसमवायेन श्रोत्रग्राह्यतोपपत्तिः। आकाशगुणत्वे तु शंखाद्यवच्छिन्ने तस्मिन्नुत्पन्नस्य श्रोत्रसंनिकर्षाभावेन तदग्राह्यतापत्तिः। आकाशगुणत्वे स्पर्शवेगवद्द्रव्यतया विधानकारणत्वेन वायोरपि तत्प्रयोजकताया आवश्यकत्वात्तद्गुणत्वमेवोचितम्। अयं चानित्यस्ताल्वादिव्यापारजन्यो वर्णाभिव्यञ्जकश्च। ताल्वादिव्यापारा एव वर्णा-

भिव्यञ्जका इति केचित् । उदात्तानुदात्तस्वरितास्तु ध्वनिधर्माः उदात्तत्वादिकं तु तात्वादिस्थानविशेषजन्यत्वम् ।

## स्फोटवादनिरासः

यत्तु वैयाकरणाः, आशुविनाशिनां वर्णानां यौगपद्यासंभवात्तैर्नित्यो निरवयवः पदस्फोटो व्यज्यते । तत्र चार्थधीरित्याहुः ।

तन्न; तेषां व्यञ्जकत्वं समुचितानां वैकल्पिकानां वा? नाद्यः, तदसंभवात् । नान्त्यः, वर्णान्तरवैयर्थ्यापत्तेः । एकाक्षरमात्रेणाप्यर्थप्रतीत्यापत्तेश्च । पूर्वपूर्ववर्णजन्य-संस्कारसचिवोऽन्त्यो वर्णोऽभिव्यञ्जक इति चेन्न; तेनैवार्थसिद्धौ स्फोटवैयर्थ्यात् । पदप्रतीतिस्तु श्रोत्रप्रत्यक्षानुपूर्वीविशेषयुतवर्णविशेषविषया । संभवति च सा ताव-द्वर्णविषयसंस्कारजन्या तत्समूहालम्बनरूपतावद्वर्णविषयस्मृतिरूपा । एवं वर्णवाक्य-स्फोटावपि निराकार्यौ । ध्वनिस्तु संयोगमात्रगुणवान् ।

## तमोऽधिकारः

तमस्तु यावतस्तेजसस्तेजसासमवहितो वा तेजःसंसर्गभाव एव । तेनैक-दीपनाशे दीपान्तरसत्त्वे च न तमोधीः । तेनैव चान्धतमसावतमसभेदधीश्च । स च स्थलविशेषेण प्रागभावः, प्रध्वंसोत्यन्ताभावो वा । अभावग्रहे च प्रतियोगिनोऽज्ञान-मात्रं तन्त्रं न सन्निधिरपि । तेन तेजसोऽनुभवेन स्मृत्या वोपपद्यते तमोग्रहः । दरी-तमोग्रहेऽपि तेजःस्मृतिरेव तन्त्रम् । नञाऽसमभिव्याहाराच्चाभावोऽपि तमो भवति । विधिमुखप्रत्ययवेद्यमिति वैशेषिकाः । अन्ये तु, यथा मन्या(अन्य)स्थमेव मुखं दर्पण-स्थत्वेन भासते प्रतिबिम्बबुद्धौ एवं पृथिव्या एव नीलं रूपमाश्रयविनिर्मुक्तमिव भाति दोषवशात् ।

यत्तु वार्तिकेन(१)तमसोऽभावत्वं निरस्य महत्त्वाल्पत्वक्रियायुक्तद्भावेऽभाव-धर्माध्यासो युक्त इत्याशयेन न तु वास्तवमिति व्याख्येयमित्याहुः ।

तन्न; तत्राविद्यमानायाः पृथिव्याः संनिकर्षाभावेन रूपस्य भानायोगात् । नील-रूपस्यैव तमस्त्वे नीलं नीलमितिवन्नीलं तम इति व्यवहारानुपपत्तेश्च ।

मिश्रास्तु, विरलजलरूपनीहारवद्विरला पृथिव्येव तमः । दृश्यते च नीलमणि-प्रभायाः प्रभानुगतपार्थिवभागस्यैव नीलमणिरूपदोषसत्त्वादारोपः सर्वैरित्याहुः ।

तद्भुपपत्तिश्च केचित् । मनोऽन्यन्मूर्तं देहिनामदृष्टवशाद्द्विविधं सूक्ष्मं स्थूलञ्च । तत्राद्यं जलं घटादिशीतस्पर्शेन कल्प्यते । तथा तेजोऽपि भुक्तान्नपरिणामेन । वायुरप्यपवरकादौ पूर्वमगृह्यमाणो द्रुतगमन-व्यजन - चालनाद्यभिहतसूक्ष्मावयवारब्धः, स्थूल उपलभ्यमानः, सूक्ष्मोऽपि पूर्वमासीदिति कल्प्यते । न चासौ देशान्तरादायाति, तद्द्वारदेशेऽनुपलम्भात् । स्थूलजलादि तु प्रसिद्धमेव । एवं पृथिव्यप्युद्भूतनीलरूपमात्राऽनुद्भूताशेषगुणान्तरा स्पन्दाप्रतिबन्धिका तमोरूपा सर्वत्रास्त्येव, तेजोऽभिभूतिरूपा तु न दृश्यते । छायारूपा तु सा नातीवाभिभूयत इत्याहुः, तदपि न । पृथिवीत्वकल्पने गौरवान्मानाभावाच्च । द्रव्यान्तरत्वकल्पनेऽपि तुल्यौ दोषाविति चेन्न; गुणक्रियादिमत्त्वेन द्रव्यत्वे सिद्धे तेजो विरोध-गन्धाभाव-पाकाप्रयोज्यरूपवत्त्वादिना च पृथिवीत्वाद्यभावेऽर्थादतिरेकः । जगत्येकैका नित्या एव नीलपीतादिव्यक्तय इति सिद्धान्तवादी तु पाकविशेषवत्येव तद्रूपमस्तीत्यभ्युपैति, अन्यथा जलेऽपि नीलापत्तेः । नीलसमवायितया पार्थिवत्वसाधनं तु निर्गन्धतया तदभावसाधनेन सत्प्रतिपक्षितम् । अनुद्भूतोऽसावस्तीति चेन्न; मानाभावात् । रूपरसस्पर्शानामपि तथात्वापत्तेश्च । अन्ततो वायुरप्यनुष्णाशीतस्पर्शानुद्भूतगन्धवत्त्वात्पृथिवी स्यात् । अतस्तमो न पृथिवी । शीतस्पर्शाभावाच्च न जलम् । निस्पर्शवत्त्वान्न तेजः । रूपवत्त्वाच्च न वाय्वादि । नीलं तम इति रूपस्य, द्वे तमसीति संख्यायाः, हस्तमिता छायेति परिमाणस्य, परत्वापरत्व-संयोगविभाग-पृथक्त्वादिगुणानां छाया चलतीति क्रियायाश्च योगान्नाद्रव्यम् । नीलादिप्रतीतेर्भ्रान्तित्वे सा कदाचिदपि निवर्तेत । न हि कदाचिदपि तमः प्रतीतेर्नीलादिविषयता(ना)स्ति । अत एव विषयस्य सार्वदिकदोषत्वकल्पनमप्यपास्तम् । तदाहुः—

नावनिर्गन्धहीनत्वादशीतत्वाच्च नोदकम् ।
न स्पर्शविरहात्तेजो रूपवत्त्वाच्च नेतरत् ॥
नाद्रव्यं येन तन्नीलं परापरविभागवत् ।
महदल्पादिसंयुक्तमेवं लोकप्रतीतितः ॥ इति ॥

वरदराजश्च—तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥ इति ॥

क्रियारूपादिमत्त्वे आलोकापेक्षस्तद्ग्रहः स्यादिति चेन्न; आलोकनिरपेक्षतमो-

मात्रग्राहकचक्षुर्गोलकस्येन्द्रियान्तरकल्पनात् । चाक्षुषमेव रूपमित्याग्रहे तु गृह्यतां चक्षुषैव तमसो नीलं रूपम् । न च नीलग्रहे आलोकापेक्षानियमः, अन्धकारस्थघटगत-नीलिमाग्रहे व्यभिचारात् । घटाग्रहे कथं तद्गतनीलग्रह इति चेत्संयुक्तसमवाय-घटकतया घटस्यैवापेक्षा न तु तद्ग्रहस्यापि मानाभावात् ।

वस्तुतस्तु, नीलत्वेन प्रकारेण घटोऽपि गृह्यत एव, नतु घटत्वेन । तत्रालोका-पेक्षत्वात् । सोऽपि न चक्षुरादिवत् करणतयाऽपेक्षितः, किन्तु विषयसाक्षात्कार प्रतिबन्धकतमसोऽपसारणेन । एवञ्च विषयसंस्कारक एवालोक इति राद्धान्तरहस्यं संगच्छते ।

किञ्च, आलोकसंयोगस्य न चाक्षुषभावविशेष्यकप्रत्यक्षत्वं कार्यतावच्छेदकं; विनाऽऽप्यालोकं निर्विकल्पकापत्तेः । किन्तु चक्षुःसंयुक्तचाक्षुषत्वमेव । तच्च न तमः प्रत्यक्षसाधारणम् आलोकसंयुक्तघटादिचाक्षुष एवान्वयव्यतिरेकाभ्यामालोकः कारणं न सर्वत्र । तथात्वे आलोकाभावप्रत्यक्षतापत्तेः । भावत्वस्य कार्यतावच्छेदकप्रवेशे तु गौरवम् । आलोकचाक्षुषे व्यभिचारश्च । अन्यच्च अन्वयव्यतिरेकाविशेषात्क्वचिदालोकः कारणम् ; क्वचिच्च तदभावोऽपि कारणतात्वैकशक्तिमत्वेनेति तु राजपथ एव । अत एव निमीलितचक्षुषाऽपि तमोग्रहादुन्मीलनमपि तत्र तत्र नापेक्षितम् । एतच्च तमो नित्यमेव । अनित्यत्वेऽनन्तोत्पत्ति - नाश - तत्सामग्रीकल्पने गौरवात् ।

ननु नित्यमेतदमूर्तं परमाणु वा ? आद्ये आत्मवन्नीरूपतापत्तिः । अन्त्ये, स्पर्शवत्त्वा-तीन्द्रियत्वयोरापत्तिरिति चेन्न;त्रुटिरूपत्वाङ्गीकारात् । ततोऽप्यणुपरिमाणे तु मानाभावः स्पर्शवत्त्वे त्वारम्भकत्वं प्रयोजकम् । न चात्र तदस्ति, किन्त्वविरला लग्नास्तमस्त्रस-रेणव एव सन्ति । महन्महत्तर तमादिधीस्तु राशिष्विव निबिडसंयुक्तबहुबहुतर-तमादित्रुटिकृतावयवसंयोग एव परिमाणान्तरारम्भक इति चेन्न; क्वचिदेव फलबलेन तादृशशक्तिकल्पनात् । अन्यथा बाल्ययौवनादिषु नानासंयोगवतो नानात्वे यो बालश्चैत्रः स एवेदानीं युवा दृश्यते इति प्रत्यभिज्ञानुपपत्तिः, सा च प्रमाणमेव बाधका-भावात् । अवयवेभ्यश्चावयवी नातीवातिरिच्यतेऽस्मन्मते । तथा चाहुः—अवयवत्वा-भिमता एव समवायितया एवाभिमतैर्निबिडसंयोगैरेकतामापन्नास्तथा तथा एकः स्थूलश्चतुरणुकः स्थूलतरः पञ्चाणुक इत्यादिरूपेण व्यवह्रियते इति पूर्वपरिमाणवद्भ्यां संयुक्ताभ्यामवयव्यन्तर इवारब्धदृढतरसंयोगादेकतामापन्ने द्वयेऽपि परिमाणान्तरा-भावान्न परिमाणवति परिमाणान्तरमित्युपालम्भः । इत्थमेव चोपलम्भे न द्रव्यान्तरे

प्रमाणमस्ति। तमसि स्पर्शाभावान्मूर्तत्वमपि न स्यादिति चेन्न; अप्रयोजकत्वात्। मतान्तरे निस्पर्शेऽपि मनसि मूर्तत्वदर्शनात् । क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वसिद्धेः स्पर्शस्य तु क्रियाहेतुत्वे न प्रमाणमस्ति । स्पर्शवद्वेगवद्द्रव्याभिघात-जातायामपि क्रियायां सोऽवच्छेदक एव, न तु हेतुः। सुतरां अदृष्टवदात्मसंयोगजायां तस्याम् । अमूर्तत्वान्नित्यत्वनीरूपत्वानुमानं तु बाधपराहतम् । तमसि च द्वौ गुणौ संयोगो नीलरूपञ्चेति ।

इति श्रीमीमांसकशंकरभट्टसूनोर्भट्टनीलकण्ठस्य कृतौ
भाट्टार्के द्रव्यनिरूपणम्।

---

# गुणाधिकारः

अथ गुणाः। ते च रूप-रस-गन्ध-स्पर्श-परिमाण-संयोग-गुरुत्व-द्रवत्व-स्नेह-ज्ञान-सुख-दुःखेच्छाद्वेष-यत्नाः पञ्चदश। कर्मभिन्नो द्रव्यावृत्तिसत्ताव्याप्यजातिमान् (समवायी) संख्याभिन्न गुणः। संख्याभिन्नसकलद्रव्यवृत्तिवृत्ति-विभुवृत्तिवृत्ति तादृशाजातिमान्। संख्याभिन्नद्रव्यत्वव्यापकतावच्छेदक-तादृशजातिमान्वा।

रूपादिप्रागभाववत्यावक्षणे गुणानामव्याप्तिरिति चेन्नः; व्यापकताया अत्यन्ताभावघटितत्वात्। एतच्च समानधर्मावच्छिन्नप्रतियोगिताकानां न सामानाधिकरण्यमिति जरन्नैयायिकमते। कस्मिंश्चिद्रक्ते रूपे नष्टे परस्मिंश्चोत्पत्स्यमानेऽन्तरा रक्तं रूपं नास्तीति' प्रतीतेर्ध्वंसप्रागभावानवग्राहितयाऽत्यन्ताभाव एव विषयः; तेनाविरुद्धं सामानाधिकरण्यमिति। नव्यमते तु, व्यापकतालक्षणे प्रतियोगिवैयधिकरण्येनाभावा विशेषणीयाः। अन्यथैतद्वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः स्यात्। द्रव्यत्वव्यापकतावच्छेदकतयैव च गुणत्वजातेः सिद्धिः। अनुगतव्यवहाराद्वा। स च न प्रात्यक्षिक एव। किन्तु मानान्तरगम्योऽपि। अतो धर्मिग्राहकेनैव मानेन गुरुत्व-पारिमाण्डल्यादौ निष्प्रत्यूहा गुणत्वसिद्धिः। सा च द्रव्यकर्मान्यत्वे सति सामान्यवान् गुण इत्युपदेशसचिवेन चक्षुषा शिंशपात्ववत्तत्पदवाच्यत्वेन गृह्यते। पदार्थत्वव्द्रूपाद्यन्यतमत्वमेव वा गुणत्वमस्तु।

केचित्तु, रूपत्वादिविशेषधर्मावच्छिन्ना तावदस्ति करणता यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति व्याप्त्या सामान्यधर्मपुरस्कारेणापि सा ग्राह्या, स च धर्मो न सत्ताऽतिप्रसक्तत्वात्, तेन गुणत्वजातिसिद्धिरित्याहुः, तन्न; एतद्व्याप्तौ मानाभावात्।

यत्तु गुणपदशक्यतावच्छेदकतया तत्सिद्धिरिति, तदपि न; मानान्तरसिद्धो हि धर्मः शक्यतावच्छेदको भवति, न तदन्यथानुपपत्त्यैवासौ कल्प्यते। अन्यथाऽक्षादिपदशक्यतावच्छेदकानुपपत्त्या पाशविभीतकादिष्वप्येका जातिः स्यादिति।

## रूपाधिकारः

तत्र चक्षुर्मात्रग्राह्यो गुणो रूपम् । पृथिव्यादित्रये तमसि चास्ति । तच्च शुक्ल-रक्त-पीत हरित-कृष्णभेदात्पञ्चधा । चित्रप्रतीतिस्तु नानाविषयिण्येव । विजातीय-चित्ररूपे तु मानाभावः । एकचित्रप्रतीतिस्तु वनसभादिवदपेक्षाबुद्धिविशेषकृता । एतानि च सर्वाणि रूपाणि पृथिव्यामेव । तेजसि तु शुक्लमेव भास्वरम्, भास्वरं स्वपरप्रकाशकम् । तदेवाभास्वरं जले, नीलं तमसि । बाह्यालोकरूपं चक्षुः सहकारि । विषयरूपं बहिर्द्रव्योपलम्भकम्, रूपवतामेव घटादीनामुपलम्भात् , नीरूपाणां महतामपि वाय्वादीनामनुपलम्भाच्च ।

शुक्लो घटो मधुरो गुड इति सामानाधिकरण्यप्रतीतेर्न घटादेर्भिन्नं रूपादीति चेन्न; अन्धादीनामपि त्वचा रूपादिग्रहापत्तेः रूपाग्रहवद्द्रव्याद्यग्रहापत्तेश्च । अन्धोऽपि रूपत्व-शुक्लत्वादि न गृह्णाति; रूपं तु गृह्णात्येवेति चेन्न; योग्यव्यक्तिगतरूपत्वशुक्ल-त्वादिग्रहे प्रतिबन्धाभावात् । किञ्च शुक्लमानयेत्युक्ते पटं, पटमानयेत्युक्तेश्च यत्किञ्चि-च्छुक्लमानयेत् । सामानाधिकरण्यं तु गुणवचनेभ्यो मतुपो लुगिष्यत इति । अर्शाद्य-जिति वा नेयं शुक्लादिशब्दानां गुणे गुणिनि च शक्तिः--'गुणे शुक्लादयः पुंसि गुणि-लिङ्गास्तु तद्वतीति' कोशात् इति केचित् ।

तन्न; नागृहीतविशेषणन्यायेन गुणमात्रवाचकत्वेनोपपत्तौ अनेकशक्तिकल्प-नाऽयोगात् । कोशस्तु 'दर्शश्च पूर्णमासश्च यागौ पक्षान्तयोः पृथक्' इतिवद्गुणि-निरूढलक्षणयाऽप्युपपद्यते । अत एव क्रमाद्गवाश्वोष्ट्रगजमात्रगतवयोवस्थावाचि वत्स - किशोर - करभक - कलभादिपदवदश्वैकार्थसमवेतश्वेतादिगुणवाचकता कर्क-शब्दस्य 'कर्कादिस्तु गुणे मत' इति वार्त्तिकोक्ता संगच्छते ।

आचार्यास्तु, जगति नीलपीतादिव्यक्तय एकैका एव नीलतरतमादिप्रतीतिस्तु विरुद्धरूपान्तराननुप्रवेशकृता, धूम्रपाटलादिप्रतीतिवत् । तेन न नीलत्वादिजातिः । एकजातीयनानाव्यक्तिषु एकैका वा नित्या, जातिवन्नीलपीतादिव्यक्तयः । स एवायं नील इति प्रतीतेर्लाघवाच्च । नीलो नष्टो रक्तो जात इति प्रत्ययादियं जात्यव-गाहिनीति चेन्न; नाशादिप्रतीतेः सम्बन्धविषयत्वेनाप्युपपत्तेः । अन्यथाऽनन्तव्यक्ति तदुत्पत्तिनाशकल्पने महद्गौरवम् । आवश्यिकी च तवापि प्रत्यभिज्ञाया भ्रमत्व-कल्पना । घटादौ तु न तथा, प्रत्यभिज्ञाया अभावात् । कानिचित्तु रूपादीनि पाक-

विशेषवत्येव द्रव्ये सन्ति, पाकस्य तदभिव्यञ्जकत्वात् । रसगन्धस्पर्शा अप्येवम् । सर्वगुडेष्वेको मधुरो रसः; सर्वदुग्धेष्वन्य इति । गन्धोऽपि सर्वकर्पूरेष्वेकः; सर्वचन्दनेष्वन्यः । स्पर्शोऽपि सर्वजलेष्वेकः, सर्वाग्निष्वन्य इति ॥

## रसाधिकारः

तत्र पृथिवीजलवृत्तिवृत्ति-तेजोवृत्त्यवृत्ति प्रत्यक्षे गुणत्वसाक्षाद्व्याप्यजातिमान् रसः, रसनेन्द्रियमात्रग्राह्यो वा । स च मधुराम्लकटुलतिक्तक्षारकषायभेदात्षोढा ॥

## गन्धाधिकारः

गन्धस्तु घ्राणकरणकसाक्षात्कारविषयो गुणत्वव्याप्यजातिमान्; घ्राणमात्रग्राह्यो वा गुणः । स द्वेधा, सुरभिरसुरभिश्च ।

## स्पर्शाधिकारः

त्वङ्मात्रग्राह्यो गुणः स्पर्शः, रूपव्यापकविशेषगुणो वा । स त्रेधा, शीत-उष्णो-ऽनुष्णाशीतश्च ।

तार्किकास्तु, रूपादिचतुष्टयं पाकजमप्यङ्गीचक्रुः । अत्र पीलुपाकवादिनो वैशेषिकाः । तीव्रस्यातिवेगवतश्च तेजसोऽभिघातेन घटादावयवविश्लेषहेतुक्रियोत्पत्त्या तन्नाशः । तेन परमाणुपर्यंतसर्वावयवसंयोगनाशात्त एव पच्यन्ते पूर्वद्व्यणुकनाश-प्रभृतिनवभिः क्षणैर्द्व्यणुकान्तरस्योत्पत्तिः तत्र च रूपान्तरस्य । तथाहि । वह्निसंयोगः, परमाणौ कर्म, परमाण्वन्तरेण विभागः, आरम्भकसंयोगनाशः द्व्यणुकनाशः,परमाणु-गतश्यामादिरूपनाशः रक्ताद्युत्पत्तिः द्रव्यान्तरारम्भानुकूलक्रिया, पूर्वदेशविभागः, तत्संयोगनाशः; द्रव्यान्तरारम्भकसंयोगः, द्व्यणुकोत्पत्तिः । तत्र च रूपान्तरोत्पत्ति-रिति क्रमात्क्षणिकपदार्थोत्पत्तिः ।

परमाणौ श्यामादिनाशरक्तोत्पत्त्योः समकालतेति चेन्न; पूर्वरूपनाशस्याप्युत्तर-रूपे हेतुत्वात् । ननु सप्तमाष्टमादिक्षण एव रक्तोत्पत्तिः श्यामादिध्वंसस्य रक्ता-द्युत्पत्तेर्वा क्षणे परमाणौ द्रव्यान्तरारम्भोत्पत्त्यनुकूलक्रियाङ्गीकारात् इति चेन्न; परमाणावग्निसंयोगजक्रियानाशं रक्तोत्पत्तिं च विना क्रियान्तरायोगात् । क्रियावति

क्रियानुत्पत्तेः निर्गुणे द्रव्यान्तरानुकूलक्रियानुत्पत्तेश्च। अत्र च रूपनाशकाग्निसंयोगात्तदुत्पादको भिन्नः, एकाग्नेस्तावत्कालमनवस्थितेः। नष्टे रूपादावग्निनाशे परमाणोश्चिरं नीरूपतापत्तेः। रक्तोत्पत्त्यनन्तरमग्निनाशे च रक्ततरतमाभावापत्तेश्च। रक्तोत्पत्तेर्द्व्यणुकानुकूलक्रियायाश्चैकक्षणवर्तित्वे त्वष्टौ क्षणाः। अन्यक्षणानां नवक्षणप्रक्रियावदेवावस्थनात्। श्यामनाशक्षणे परमाण्वन्तरे क्रियाङ्गीकारे तु सप्तक्षणा.। तथाहि। एकपरमाणुकर्मणाऽन्यस्माद्विभागः। आरम्भकसंयोगनाशः द्व्यणुकनाशः, श्यामनाशपरमाणुक्रिये, रक्तोत्पत्तिविभागौ। संयोगनाशः परपरमाणुसंयोगः द्व्यणुकोत्पत्तिः रक्तोत्पत्तिः।

द्व्यनाशक्षणे परमाणौ क्रियाङ्गीकारे तु षष्ठे। यथा परमाणुक्रियया परपरमाणोर्विभागः। तत्संयोगनाशः। द्व्यणुकनाशपरपरमाणुक्रिये। श्यामनाशपरमाण्वन्तरकर्मजविभागौ, रक्तोत्पत्तिपरमाण्वन्तरपूर्वसंयोगनाशौ। परपरमाणुसंयोगः, द्व्यणुकोत्पत्तिः, रक्तोत्पत्तिः। संयोगनाशक्षणे परमाणौ क्रियाङ्गीकारे तु पंचमे क्षणे गुणान्तरोत्पतिः, तत्र क्रमः। परमाणौ कर्म, आरम्भकसंयोगनाश परमाणुकर्मणी। पूर्वद्व्यणुकनाश परपरमाणुकर्मज विभागौ। श्यामनाशपूर्वसंयोगनाशौ। रक्तोत्पत्तिद्रव्यारम्भकसंयोगौ। ततो द्व्यणुकं, ततो रक्तम्। दशैकादशादिक्षणप्रक्रिया तु भूयोऽनुपयोगान्नोक्ता।

नैयायिकास्तु, सोऽयमिति प्रत्यभिज्ञादनन्तनाशतदुत्पत्तिकल्पने गौरवाद्विस्फारितनेत्रेणावहिततया पाकमध्येऽग्निसंयुक्तस्यावयविन एवोपलंभादभावानुपलब्धेर्जटाद्यन्तर्गतजलतैलादिनिर्गमदर्शनेन तेषां सच्छिद्रत्वावगमेन तदन्तगतैर्वह्नेः सूक्ष्मावयवैर्दृढतरसंयुक्तेष्वपि घटाद्यवयवेषूपपद्यते पाकः। घटाद्यन्तः स्थितस्यापि पाषाणादेरग्निसंयोगेन भस्मीभावे कथं तदाधारभूतं पिठरं न नश्येदिति चेन्नः; वह्न्यौषधसंयोगस्य तत्र कारणत्वात् प्रत्यभिज्ञाभावे त्ववयविनोऽपि नाश इत्याहुः।

## परिमाणाधिकारः

परिमितप्रतीतेरसाधारणं कारणं परिमाणम्। अनुगतप्रतीत्यैव चैतज्जातिसिद्धिः। अत्र तार्किकाः। तच्चतुर्विधं - अणु महद्दीर्घं ह्रस्वञ्च। तत्र परमाणु-

द्व्यणुकयोरेवाणुपरिमाणम् । तत्रापि परमाणुगतस्यैव तस्य पारिमाण्डल्यसंज्ञा तथा द्व्यणुके ह्रस्वत्वम् । परमाणावतिह्रस्वत्वम् । आकाशकालदिगात्मस्वतिदीर्घत्वमहत्त्वे अन्येषु त्ववान्तरदीर्घत्वमहत्त्वे इत्याहुः, तन्न; परमाणुद्व्यणुकयोराकाशकाल-दिगात्मसु परिमाणे मानाभावात् । द्रव्ये द्रव्यत्वं तु तत्तत्सिद्धावप्रयोजकम् । तस्य परिमाणं विनापि सत्त्वे बाधकाभावात्, न चैतद्योगिनां प्रत्यक्षम्, तत्सत्त्वे मानाभावात् ।

वस्तुतस्तु, परमाणुद्व्यणुकयोरेव न प्रमाणमस्ति । अत्यपकृष्टपरिमाणं तु त्रुटा-वयवपरिमाणाजनकतया प्रत्यक्षेण च सिद्धम् । आकाशादिपरिमाणवन्नित्यत्वान्न तत्परि-माणान्तरजनकमिति चेन्न; आकाशपरिमाणे कार्याजनकत्वस्य सहकारिसमवायि-कारणाभावप्रयुक्तत्वेन नित्यत्वस्य तत्राप्रयोजकत्वात् । वस्तुतस्त्वाकाशे परिमाण एव न प्रमाणमस्ति । अत एवादित्यपुराणं—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ इति ॥

आमलकादिषु त्वाम्राद्यपेक्षयाऽपकर्षो न त्वात्यन्तिकः । एवमेव शरदावि-क्षुमपेक्ष्य ह्रस्वत्वमपि । अपकर्षस्तु गुणगतो जातिविशेषः प्रात्यक्षिक एव । अतिमहत्त्व-दीर्घत्वेऽपि भूमण्डल-पारावारादावेव विश्रान्ते । ह्रस्वत्व-दीर्घत्वे तु महत्त्वव्याप्य एव जाती इति केचित् । इदमस्माद्दीर्घं न महदिति भेदप्रतीतेः परिमाणान्तर एवेति-तु युक्तम् । त्र्यस्रचतुरस्रवर्तुलत्वादयस्तु संस्थानविशेषा एव । त्रुटिभिन्नपरिमाणं परिमाणतः संख्यातश्च जन्यते । चैत्रादिदेहपुष्टता तु तूलगोलकवदनारब्धद्रव्यान्तर-संयोगादपि । परिमाण एवातिपरिमाणान्तरानुपपत्तिरिति चेन्न; मानाभवात् सजा-तीयपरिमाण एवायं प्रतिबध्यप्रतिबन्धकभावः । पुष्टिदशायां देहान्तराङ्गीकारे तु स एवायं चैत्र इति प्रत्यभिज्ञानुपपत्तिः । अत एव पित्रादिश्राद्धं पुत्रादेः संगच्छते । अन्यथा स्थूलदेहस्य पित्राजन्यत्वाच्छ्राद्धानुपपत्तिः । भवदभिमतावयव्यन्तरारंभकसं-योगस्यैव परिमाणान्तरमात्रारम्भकत्वाङ्गीकारे न कोऽपि दोषः ।

## संयोगाधिकारः

द्रव्यासमवायिकारणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान् संयोगः । घटपटयोरयं

संयोग इति प्रत्यक्षगम्यश्च । स द्वेधा-नित्योऽनित्यश्च । अजयोर्नित्यः, यथाऽऽत्ममनसोः । स चात्मसाक्षात्कारान्यथानुपपत्त्या कल्प्यः एवं श्रोत्रवर्णयोरपि वर्णसाक्षात्कारानुपपत्त्या । अन्त्यस्तु द्वेधा - अन्यतरकर्मजः, उभयकर्मजश्च ।

ननु कर्मत्वेनैव कारणताऽस्तु, किमन्यतरत्वादिप्रवेशेन; अन्यथा दण्डादिष्वपि तथा स्यात्, इति चेन्न; कारकमात्रसमवायिकर्मजे तद्वृक्षसंयोगे वृक्षे कर्माभावेन प्रसक्तव्यभिचारवारणाय यत्रैतत्काके समवेतं कर्म तत्रैव तत्संयोगः समवेत इति कार्यकारणभावो वाच्यः, स एव संयोगोऽन्यतरकर्मज इत्युच्यते । यत्र तु संयोगाधारयोर्द्वयोरपि मेषयोः कर्म, स उभयकर्मजः । तत्र 'तरौ काक' इतिवदाधाराधेयभावप्रतीत्यभावेन प्रतियोग्यनुयोगित्वाभावादुभयत्रापि समवायसंबन्धेनैव संयोगः कथंचिद्विद्यमाने अपि प्रतियोगित्वानुयोगित्वेन संबन्धतयोच्येते । व्यभिचारवारणाय हि तत्र तथा कल्पनम् । न त्वत्र, समवायेनैव निर्वाहात् । विजातीयौ च तौ । व्यक्त्यन्यत्वेनैवोपपत्तौ न जात्यन्तरकल्पनेति चेन्न; उभयकर्मजस्थलेऽन्यतरकर्मणोऽपि सत्त्वात्तज्जन्यानंतव्यक्तिकल्पनातो जातिकल्पनायां लाघवात् । तत्रैकैककर्मजन्यजातीयसंयोगद्वयापत्तिस्तु विजातीयसामग्र्याः प्रतिबन्धकत्वाद्वापास्ता । युगपत्त्रिचतुरादिमेषकर्मजास्तु अनेक एव नैकः । संयोगजसंयोगस्तु नास्त्येव मीमांसकमते । हस्तेन संयुक्ते तरौ यद्यपि कायसंयोगधीः स्यात्तथापि सा हस्तसंयोगनिबन्धनैव ।

यत्तु, संयोगो न कर्मजः, किन्तु नैरन्तर्यप्रयुक्त इति मिश्राः । तन्न; नैरन्तर्यमेककाले वृत्तित्वमेकदेशे वा ? आद्ये हिमवद्विन्ध्ययोस्तदापत्तिः । अथैककालजन्यत्वम्, तथाप्येककालजो हिमवद्घटो विन्ध्यगतपटेन संयुज्येत । अन्त्ये, मूर्तयोरेकदेशताविरोधः । यदि तु संयुज्यमानदेशातिनिकटदेशवृत्तित्वं संयोगः, तदासौ दूरस्थशरादेः कर्मणैव जन्यत इति सिद्धं कर्मणः कारणत्वम् । अजयोरपि जन्य एव संयोग इति मिश्राः ।

अत्राहुः । स किमेक एव ? सन्तानरूपो वा ? नाद्यः, अजद्वयरूपसामग्रीसत्त्वेनान्योत्पत्तेर्दुर्निवारत्वात् । संयोगस्य तत्प्रतिबन्धकत्वे पूर्वमपि संयोगसत्त्वेन तदनुत्पत्त्यापत्तेः । तन्नाशोत्तरमन्योत्पत्तेर्दुर्निवारत्वात् । तन्नाशस्तु जन्यभावत्वेनावश्यक एव । नाशसामग्री नास्ति चेदनादिरेवास्तु न जन्यः । अथ सुषुप्तिकाले नश्यति; अन्यथा तदानीमात्ममनःसंयोगात् ज्ञानापत्तेः । अचेतयन्नेव हि सुप्त इत्युच्यते । तेनानेक एव

संयोगा इति चेन्न; ईदृशकल्पनातो नित्यत्वस्यैवौचित्यात् । आत्मनो व्यापकत्वं चान्यथा हीयेत । ज्ञानं तु त्वगादीन्द्रियमनोयोगाभावान्नोत्पद्यते । या तु वार्तिके संयोगस्य वियोगान्ततोक्ता सा 'संयोगा विप्रयोगान्ता' इति पुराणोक्तार्थानुवादत्वात् घटपटादि-जन्यसंयोगपरा । विवेकस्तु अजयोरप्यात्ममनसोस्तावदेकत एव संयोगः ।

भिन्नमते मनसोऽणुत्वेन तत्क्रियया पूर्वपूर्वनाशादुत्तरोत्तरोत्पत्तेश्च । व्यापक-योर्दिग्वर्णयोस्तु नित्य एक एव संयोगः, वर्णानभिव्यक्तेस्तु सर्वदा तदग्रहः, अभिव्य-ञ्जकस्तु वायुगुणो ध्वनिः । अन्येषां त्वात्माकाशादीनामजादीनां संयोगे न किञ्चिन्मानम् । मनोव्यापकत्वमते त्वात्ममनःसंयोगोऽपि नित्य एव । सर्वदा ज्ञानानुत्प-त्तिस्तु विजातीयेन्द्रियमनःसंयोगाभावात् , स तु फलबलकल्प्यः ।

यदपि ते संयोगो न द्विष्ठः किन्तु सादृश्यवत्प्रत्येकमेकैकनिष्ठ एव; घटनिरूपितः पटे, पटनिरूपितश्च घटे, न तु स्वनिरूपितः स्वस्मिन्; घटो घटसंयोगीति प्रतीतेरभावादित्याहुः । तदपि न । प्रत्यक्षस्यैकमात्रसंयोगगोचरत्वेन तद्भेदे मानाभावात् । एकया सामग्र्या एकमेव कार्यं जन्यत इति योगसिद्धि-नयविरोधाच्च । सामग्री तु कारणसाकल्यम् यावत्कारणप्रागभावानाधारं, कार्यप्रागभावाधारः क्षणो वा । तेन समवायिकारणभेदादिह सामग्रीभेद इत्यप्यपास्तम् । सादृश्यं तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । तत्र परस्पर - प्रतियोगिक - भेदभूयोधर्मवत्त्वयोर्मुखे चन्द्रे च प्रत्येकं वृत्तेः प्रतिसम्बन्धि भिन्नम् । अनेकसंयोगस्तु निःप्रतियोगिक एक एव द्वयोरास्ते बाधकाभावात् । घटो न घटसंयोगीति प्रतीतिरेव बाधिकेति चेन्न; तस्या हि घटविशिष्टसंयोगस्य घटे भाव एव विषयो, न तु संयोगभेदः । द्वित्वादिवदन्यतरसम्बन्धिनाशनाश्यत्वाद् घटपटादिषु व्यासक्तः संयोग इति केचित् । घटे पटस्य संयोगः, पटे च घटस्येति प्रतीतेर्न व्यासक्तः; किन्तु द्विष्ठः । अन्यतरसंबन्धिनाशनाश्यत्वं त्वप्रयोजकम् । घटपटौ संयुक्ताविति प्रतीतिस्तु समूहालम्बननिबन्धना । द्विष्ठत्वं तु स्वाश्रयान्योन्याभाव-वद्वृत्तित्वम् । स्वसमानाधिकरणकत्वाभाववद्वृत्तित्वं वा । अव्याप्यवृत्तिश्च संयोगः, मूले वृक्षः कपिसंयोगी न शाखायामिति प्रतीतेः । संयोगतदभावयोर्मूलशाखे एवाश्रयाविति चेन्न; द्वयोरपि वृक्षगतत्वप्रतीतेः । विरुद्धयोरेकाश्रयत्वासंभवाद्भ्रमो-ऽयमिति चेन्न; अबाधितप्रतीतेरविरोधमेव किं न रोचयेः । विरोधाविरोधयोः प्रातीतिकत्वात् । अव्याप्यवृत्तित्वं तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् ,

स्वात्यन्ताभाववद्वृत्तित्वम्, स्वाविरोध्यत्यन्ताभावप्रतियोगित्वं, स्वात्यन्ताभावाविरोधित्वम् वा। यद्वा संयोगो व्याप्यवृत्तिरेव, किञ्चिदवयवावच्छेदेन तु तदाधारता निरूप्यते इत्येवाव्याप्यवृत्तित्वम्।

संयोगश्च द्रव्यगुणकर्मणामसमवायिकारणम्। तत्र द्रव्यारम्भे निरपेक्षः। तन्तुसंयोगस्य पटारम्भेऽन्यापेक्षाविरहात्। कर्मारम्भे तु नोदनाभिघातौ स्पर्शवेगावपक्षेते। संयोगनाशोऽपि स्वसमानाधिकरणाद्विभागात्; निष्क्रियद्रव्यनाशे त्वाश्रयनाशादपि।

## गुरुत्वाधिकारः

गुरुत्वं तु पतनासमवायिकारणत्वम्। पृष्ठादारोपितपाषाणादेर्गु कापपानीयादेश्च त्वक्प्रत्यक्षमेतत्। चक्षुःसंयोगवतोऽप्यतिसंनिकृष्टातिदूरस्थकज्जल-घटादेरग्रहणात्संनिकर्षदूरत्वयोर्दोषत्वं, तद्भिन्नसंयोगत्वेन वा कारणतेतिवद्देहोपरिभागस्थसंयोगविशेष एव गुरुत्वग्राहकः। देहाधस्तिर्यक्प्रदेशौ प्रतिबन्धकौ वा। तुलावनत्यनुमेयञ्च।

यत्तु केचित्, अग्निवाय्वोर्ध्वतिर्यग्गमनवददृष्टवदात्मसंयोगादेव पतनोपपत्तेर्न गुरुत्वसिद्धिः। तद्वदेव यावदाश्रयभावि स्यादिति चेन्न; तज्जन्यत्रुटिकर्मणि व्यभिचारात्। न च पतनं समानाधिकरणैकमात्रवृत्तिगुणासमवायिकारणकं, पतनत्वात् शरपतनवदिति तत्सिद्धिः। मात्रप्रवेशे गौरवात्। वेगस्य गुणत्वाभावेन दृष्टान्तासिद्धेर्वह्निवायुकर्मणोरपि गुणान्तरजन्यतापत्तेश्च। यदि तयोर्जातिस्वाभाव्यादेवोपपत्तिर्न तु कारणान्तरस्य कल्पनं, न वा विजातीयादृष्टस्य; तदेहापि रससमानाधिकरणजातिमत्समवायिकारणमेवास्तु न त्ववश्यमसमवायिकारणापेक्षा, मानाभावात्। अन्यथा अग्निवायुकर्मजननार्थमपि विजातीयकर्मापत्तिः। न चादृष्टवैजात्यादेव तदुत्पत्तिः, कस्मिन्नात्मनि तददृष्टं? किंकर्मजन्यमिति च विनिगमयितुमशक्यत्वात्। अतो न गुरुत्वसिद्धिरित्याहुः। तदपि प्रत्यक्षत्वादेवापास्तम्। एतच्च गुरुत्वं त्रुटावेव न तदारब्धेऽवयविनि, द्विबहुत्रुटिगतैरेव तैस्तस्य अधिकाधिका मतिसिद्धेः। तत्रापि गुरुत्वान्तरकल्पने तु द्विपलहेमखण्डद्वयकृते कटकेऽधिकपरिमाणापत्तिः। कारणगततन्नाशोक्तौ त्वतिगौरवम्। ननु कार्यकारणगुणत्वे न कार्यकारणभावादावश्यकं कार्यं गुरुत्वम्, महाभारप्रक्षिप्ततृणगुरुत्वानुपलब्धिवत्त्वाधिक्यानुपलंभ इति चेन्न; आरोपे सति निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोप' इति न्यायेन कारणेन

कार्योपादनायोगात् । तृणगुरुत्वस्य त्वतिनिकृष्टत्वादनुपलम्भः । न चेहातिनिकृष्टत्वमस्ति । अत एव सुगन्धिदुर्गन्धिप्र(प)त्तीकारब्धेऽवयविनि गन्धाभाववत्, (पृ)रागाण्वारब्धे रसाभाववच्च नास्त्येवावयविनि गुरुत्वम् । सुगन्धिभिर्मधुरैर्वा पत्तीकैरारब्धयोरवयविनोर्निर्गन्धित्व नीरसत्वयोरपीयमेव दिक् । अवयवगन्धमाधुर्याभ्यामेव तादृक्प्रतीत्युपपत्तेः । रूपे तु नैवं घटादेरचाक्षुषत्वापत्तेः ।

केचित्तु, पररूपग्रहणसहकारिणैव पार्थिवावयवाभिभूतरूपस्य सुवर्णस्य, कुंकुमरक्तस्येव वा पटस्यावयवरूपग्रहसहकारिण ग्रहणोपपत्तेर्नीरूपमेव परं शुक्लमुतपश्यन्ति । अभिभूतानभिभूतसाधारणं रूपवत्त्वमेव चाक्षुषत्वे तन्त्रमिति चेन्न; अभिभवस्य कारणत्वशक्तिनाशरूपत्वेनाभिभूतरूपसत्त्वेऽप्यचाक्षुषत्वापत्तेः । तेजः सूक्ष्मपक्षिपदतूलांशादावूर्ध्वगतिदर्शनाल्लघुत्वमप्यतिरिच्येतेति चेन्न; गुरुत्वादिवत्प्रत्यक्षादिमानाभावात् । ऊर्ध्वगतिस्त्वाद्ये स्वभावादेव । अन्त्ययोस्तु वायुवशात् । प्रत्युत गुरुत्वमेवास्ति, रत्नतुलाकण्टकानमनदर्शनात् । अतो गुरुत्वाभाव एव लघुत्वम् । गुरुत्वस्य प्रत्यक्षत्वाच्च न वैपरीत्यम् । एतच्च गुरुत्वं पृथिवीजलयोरेव, तद्धेतुकपतनदर्शनात् । या तु पार्थिवे धूमादावूर्ध्वगतिः, सा वह्नेर्वायोर्वा नोदनादभिघाताद्वा । भूयसि तु धूमेऽधोगतिरप्यस्ति एव ।

## द्रवत्वाधिकारः

द्रवत्वं द्वेधा, सांसिद्धिकं नैमित्तिकञ्च । आद्यं जलमात्रे । अन्त्यं तेजःसंयोगाद्भुवि । नन्वाप्ययोर्हिमकरकयोः स्वाभाविकद्रवत्वाभावात्कथं जलत्वावच्छेदेनाद्यम् । भौमोष्मसंयोगजद्रवत्वकठिनसंयोगवत्त्वाभ्यां पार्थिवत्वमेव वाऽस्तु तयोः, तेजः संयोगजन्यद्रवत्वयोर्जतुघृतयोरिवेति चेन्न; दिव्यतेजःप्रतिबद्धद्रवत्वैर्जलावयवैरारब्धौ तौ मधुरैकरसवत्त्वात्सार्वदिक्शीतस्पर्शवत्त्वाच्चाप्यावेव; कठिनसंयोगवत्त्वं तु कादाचित्कं । न पार्थिवत्वमनुमापयति । उपाधिश्चानुष्णाशीतस्पर्शवत्त्वम् । साध्यव्यापकोऽपि साधनाव्यापकत्वाभावान्नायमुपाधिरिति चेत् यदभावप्रयुक्तः पक्षे साध्यसाधनसंबन्धाभावस्स तत्र हेतावुपाधिरिति लक्षणसत्त्वात् । स्वरूपासिद्ध एवायमिति चेत्सत्यम् । उपाधेर्दूषणान्तरसांकर्यनियमात् ।

सुवर्णं तु गुरुत्वपीतरूपवत्पार्थिवमेवेत्युक्तं प्राक् । लवणं तु घृतजतुविपर्ययेणाग्निसंयोगप्रतिबध्यद्रवत्ववत्त्वादाप्यमिति केचित् । परे तु क्षारैकरसवत्वा-

त्पार्थिवमेव । तत्त्वप्रयोजकं, नैमित्तिकद्रवत्ववत्त्वाच्च । तस्याग्निसंयोगजन्यत्व-प्रतिबध्यत्वे त्वप्रयोजके ।

## स्नेहाधिकारः

अथ स्नेहः । स च गन्धवद्वृत्त्यवृत्तिरसवन्मात्रवृत्तिवृत्तिगुणत्वसाक्षाद्व्याप्य-जातिमान् । स च मृजा-संग्रहयोर्हेतुः । मृजोद्वर्तनजन्या शुद्धिः, संग्रहो मृत्पिष्टादि-पिण्डीभावप्रयोजकसंयवनजः संयोगविशेषः । अयं च जलविशेषगुणस्स नुटौ नित्यः, तत्कार्ये त्वनित्यः । पार्थिवघृतादौ स्नेहप्रतीतिस्तु घृतोपष्टम्भकजलभागगतत्वा-त्परम्परया । घृतादौ द्रवत्वमप्येवं स्यादिति चेन्न; तस्य नैमित्तिकत्वेन तद्वैलक्षण्यात् ॥

## ज्ञानाधिकरः

इच्छासाक्षात्कारणमात्मविशेषगुणो ज्ञानम् । तच्च द्वेधा, प्रमाणमप्रमाणञ्च । तद्वति तदवगाह्यनुभवः प्रमाणम् । तच्चतुर्धा । संशय-विपर्यय-स्मृति-संवादभेदात् । एकधर्मिकविरुद्धानेकप्रकारकं ज्ञानं संशयः । संस्कारजन्यं ज्ञानं स्मृतिः । संवादस्य तु गृहीतार्थग्राहित्वादेवाप्रामाण्यं, भ्रमसंशयौ न स्त इति प्राभाकराः । तच्च प्रत्यक्षवादे निराकरिष्यते ।

## सुखाधिकारः

सुखत्वं तु इच्छाविषयत्वे सति समानकालिक-समानाधिकरण-साक्षात्कार-विषयत्वम् । तच्च सुखमिन्द्रियार्थसंनिकर्षजन्यम् । कान्तादिविषयोपलम्भजम् । उपलंभेनेन्द्रियसंनिकर्षोऽन्यथासिद्ध इति चेन्न; अन्वयव्यतिरेकाभ्यां क्लृप्तेः; संनिकर्षस्य कारणत्वे उपलम्भस्य व्यापारकल्पनात् । अत्र स्वसुखमुत्पन्नमात्रवेद्यम्, परकीयं त्वनुमेयम् । अहं जानेऽहंसुखीति विलक्षणप्रतीतेर्ज्ञानादतिरिच्यते सुखम् । इदञ्च चतुर्विधम् , वैषयिकं, आ(भि)भिमानिकमाभ्यासिकं, मानोरथिकञ्च तत्राद्यमुक्तम् । द्वितीयं पाण्डित्याद्यभिमानजम् । तृतीयं मृगयाश्रमादिजन्यं शरीरलाघवजम् । अन्त्यं विषयानुध्यानजन्यम् । स्वर्गसुखस्वरूपमुक्तं श्रुतौ— 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरा । अभिलाषोपनीतं यत्तत्सुखं स्वः पदास्पद'मिति । भिन्नान्तेन दुःखासंस्पृष्टत्वमुक्तम् । न च ग्रस्तमविच्छिन्नम् । अनन्तरा—इच्छाव्यवहितोत्पत्तिमत् । अभिलाषोपनीतं-कारणान्तरं विनाप्यभिलाष-

मात्रजन्यस्रगादीन्द्रियसंनिकर्षवत्। यद्वा विनापि चन्दनादिविषयं तदभिलाषमात्रेणैव तादृशं सुखं जायत इत्यर्थः।

## दुःखाधिकारः

द्वेषविषयत्वे सति समानकालिकसमानाधिकरणसाक्षात्कारविषयत्वं दुःखत्वम्। तच्च दुःखमिन्द्रियार्थसंनिकर्षजमनिष्टविषयोपलम्भजम्। इदञ्चाध्यात्मिकमाधिदैविकमाधिभौतिकञ्चेति त्रिधा। स्वदुःखमुत्पन्नमात्रवेद्यं, परकीयं तु मुखविच्छायत्वाद्यनुमेयं द्विक्षणस्थायि स्वसाक्षात्कारनाश्यं नरकपातनादि बहुप्रकारकञ्चेति।

## इच्छाधिकारः

द्वेषान्यः प्रयत्नासाधारणहेतुरात्मविशेषगुण इच्छा। सा च सुखे निरुपाधिः, तत्साधने त्वौपाधिकी। बहुविधा चेयम्। तत्र मैथुनेच्छा कामः, अभ्यवहरणेऽभिलाषः, पुनः पुनः समानविषयेच्छा रागः। अवश्यं क्रियां करिष्यामीति इच्छा संकल्पः। निरुपाधिपरदुःखजिहासा करुणा। भोग्यविषयतितिक्षा वैराग्यं, गूढेच्छा भावः। परवञ्चनेच्छा कपटम्। आवश्यकेऽपि द्रव्यव्ययेऽपरित्यागेच्छा तृष्णा परविनियुज्यमानद्रव्यावश्यरक्षणेच्छा कार्पण्यम्। एवं सिसृक्षा संजिहीर्षादयोऽपि तत्तत्क्रियाभेदौपाधिक्यो बोध्याः।

## द्वेषाधिकारः

अथ द्वेषः। स च हानासाधारणहेतुरात्मविशेषगुणः, शत्रुं द्वेष्मीत्यनुभवसिद्धः। दुःखासाधारणहेतुको ना(त्रा) सः। स च स्वीयो मानसप्रत्यक्षः। परकीयो मुखविकारचक्षुरारुण्याद्यनुमेयः। एनं हन्मीत्यादिप्रयत्नहेतुः। बहुविधश्चायम्। तत्र प्रत्युत्पन्नदुःखजन्य आशुविनाशी शरीरेन्द्रियविकृतिहेतुः क्रोधः। चिरापकारफलोपलक्षितविकारो द्रोहः। अपकर्तरि प्रत्यपकारासामर्थ्येऽन्तर्गतो द्वेषो मन्युः। अयमेव स्फुटोऽसूयेत्युच्यते। परगुणद्वेषोऽक्षमा, सैवासहिष्णुताऽपि। स्वगुणपरिभवाऽऽशङ्काधिक्येऽयमेवापकर्षः। स्वगुणपरिभवाशङ्कया परगुणद्वेषोऽमर्षः। स्वान्यायकारी द्वेष ईर्ष्या। इष्टसाधनताज्ञानजन्येच्छेव प्रवृत्तिप्रयत्ने,ऽनिष्टसाधनताज्ञानजन्यो द्वेषोऽपि

निवृत्तियत्ने हेतुः । शत्रुवधादौ प्रवृत्तिस्तु इष्टसाधनताज्ञानजन्येच्छात एव, द्वेषोऽपि तदनुयायी ।

## यत्नाधिकारः

यतेऽहमिति प्रतीतिसिद्धयत्नत्वजातिमान् यत्नः । स द्वेधा, जीवनयोनिस्तदन्यश्च आद्यः, सुषुप्तौ जीवनकारणादृष्टहेतुः । प्राणापानसन्तानप्रेरणानुमेयः । अदृष्टादेव सेति चेन्न; पूरकरेचकादौ यत्नजन्यत्वदर्शनात् । अन्यस्त्विच्छाद्वेषहेतुर्हिताहितप्राप्तिपरिहारफलकशरीरतदवयवचेष्टाहेतु । प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया चेष्टा ।

इति गुणनिरूपणम् ।

## गुणान्तरनिरासनिरूपणे

## पृथक्त्वनिरासाधिकारः

पृथग्व्यवहारासाधारणकारणं पृथक्त्वं गुणान्तरमिति वैशेषिकाः तन्न; घटःपटो न, घटात्पटः पृथग्भिन्नोऽन्य इत्येकाकारप्रतीत्याऽन्योन्याभावेनैव तत्सिद्धेः । यद्यपि स पृथक्त्वैकार्थसमवायादुपपद्यते कथञ्चित्तथापि घटरूपं घटादन्यदित्यत्रानुपपत्तिस्तदवस्थैव न च वैपरीत्यम्; रूपं रसो न, रसात्पृथगिति गुणकर्मादिष्वपि व्यवहारात् । ननु घटात्पटः पृथगिति पञ्चमी न स्यात्, अभावज्ञाने प्रतियोगिज्ञानवत् अवधिज्ञानापेक्षाभावात् । स्याद्वा घटात्पटो नेत्यत्रापि सेति चेन्न; 'अन्यारादितरर्ते' इति शब्दविशेष एव तस्या अनुशासनात् । अत एव घटात्पटोऽन्य, इतर इति प्रतियोगित्व एव सोपपद्यते, न त्ववधित्वे । घटः पटो नेति नञ् प्रयोगासमभिव्याहारे त्वप्रयोगादेव न सा । न चैतावताऽर्थान्तरता,वैधर्म्यमेव पृथक्त्वमिति चेन्न, पीतान्नीलो विधर्मा न तु पृथगित प्रतीतेः ।

## विभागनिरासाधिकारः

विभागस्तु संयोगात्यन्ताभाव इति केचित्, तन्न; रूपं घटाद्विभक्तमिति प्रतीत्यापत्तेः । द्रव्यवृत्तितयाऽविशेषितोऽयमिति चेत्, अवयवावयविनोस्तथा

प्रतीत्यापत्तेः । अतः स्वसमानाधिकरणसंसर्गाकालीनः संसर्गध्वंस एव । अतएव हिमवद्विन्ध्यौ भिन्नावित्येव धीर्न तु विभक्ताविति । अन्यतरसंयोगिनाशेऽप्यस्त्येव विभागप्रतीतिः । एतत्प्रतीतौ सन्देहे तु अनेकसंयोगिवृत्तित्वेन ध्वंसो विशेषणीयः यावत्प्रतियोग्यधिकरणाधिकरणकः संयोगः ध्वंस इति यावत् । अत एव समानाधिकरणस्वत्वसंबन्धवतामेवभ्रातृपितृव्यादीनां 'विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते' इति । 'विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्' इति तत्र विभाग उक्तः न तु असमानाधिकरणस्वत्ववतोर्ययोः कयोश्चिदपि । एवं संप्रदानसंप्रदेयसम्बन्धवतोरेवद्रव्यदेवतयोस्तद्वाधरूपो विभाग उक्तः । "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमाभ्युदियात्स त्रेधा तण्डुलान् विभजेदि"ति । अतः संसर्गनाश एव विभागः । विभागाभाव एव संयोगो न गुणान्तरमिति वैपरीत्यं किं न रोचते इति चेन्न; एवं हि विभागप्रागभावसत्त्वाच्छरक्रियोत्तरक्षण एव 'शर उत्तरदेशेन संयुक्त' इति बुध्यापत्तिः । न च विभागध्वंस एवास्तु इति वाच्यम् । तथापि अन्यनिरपेक्षयैव क्रियया उत्तरदेशविभागध्वंसजननाच्छरक्रियाव्यवहितोत्तरक्षण एवोत्तरदेशसंयोगी शर इति बुद्धिः स्यात्, न स्याच्च शरोत्तरदेशयोर्विभक्तबुद्धिः कर्मणा तन्नाशात् ।

वस्तुतस्तु, हिमवद्विन्ध्यादिषु विभागप्रतीत्यभावादेव विपरीतशंकानिरासः । अत एव संयोगसंसर्गाभाव एव विभाग इत्यपि निरस्तम् ।

यत्तु, संयोगनाशकत्त्वेन विभागः सेत्स्यति । क्रियाया एव तन्नाशकत्वोक्तौ करकर्मणा तत्तरुसंयोगनाशेऽपि काये कर्माभावेन तत्तरुसंयोगनाशायोगात् । अतः करक्रियया करतरुविभागस्ततः कायतरुविभागस्ततः कायतरुसंयोगनाशइत्याहुः ।

तन्न; गुणान्तरकल्पनमपेक्ष्य व्यधिकरणकर्मण एव कारणत्वौचित्यात् फलबलेन स्वाश्रयाश्रितसंयोगत्वस्यैव नाश्यतावच्छेदकत्वकल्पनेनातिप्रसङ्गः । ततस्त्वन्मते अवयवावयविनोरभेदेन करकर्मण एव कायकर्मत्वात्तेनैवोपपन्नः कायतरुविभागः । विभागे सन्निति प्रतीतिस्तु प्रामाणिकत्वपरा, न तस्य भावत्वसाधिका । अन्यथाऽभावोऽपि सन्निति प्रत्ययाद्भावः स्यात् ।

## परत्वापरत्वनिरासाधिकारः

परत्वापरत्वे अपि न गुणौ । अल्पबहुसंयोगरूपसंनिकर्षविप्रकर्षाभ्यां

दैशिकनद्व्यवहारोपपत्तेः । कालिकयोस्त्वल्पबहुसूर्यादिक्रियारूपयौवनवार्द्धक्याभ्यामेव तदुपपत्तिः ।

यत्तु केचित्, परत्वापरत्वे सावधिकेऽयमस्मात्पर इत्यादिप्रतीतेः । संयोगस्तु न तथा, अयमस्मात्संयुक्त इत्यप्रतीतेः । एवं परत्वापरत्वे प्रत्येकवृत्तिनी, संयोगस्तु व्यासज्यवृत्तिः । अतस्ते गुणान्तरे एवेतीतरे एवं कालिके अपीत्याहुः ।

वस्तुतस्तु, न केवलाभ्यां संयोगक्रियाभ्यां परत्वापरत्वव्यवहारोपपत्तिः, किन्तु भूयोऽल्पादिसंख्याविशेषविशिष्टाभ्याम् । तत्र संख्याया इदमितोऽल्पमेतदितो बह्विति सावधित्वात्तदंशेन परत्वापरत्वयोः सावधित्वम् । संयोगक्रिययोस्तु न तत् । यद्वा तयोरपि परत्वापरत्वशब्दविशेषाभिहितयोरवध्याकाङ्क्षा न संयोगक्रियाशब्दाभिहितयोः चलति गच्छत्यभिहितस्यैकस्यैवार्थस्य कर्माकाङ्क्षानाकाङ्क्षे । प्रत्येकवृत्तित्वं तु संयोगस्याप्ययुक्तमेव । किं चातिरिक्तगुणत्ववादिनोऽपि क्रियासंयोगयोः परत्वापरत्व-व्यञ्जकताऽऽवश्यकी, अतस्ताभ्यामेव व्यवहारोपपत्तौ किमतिरेकेण ? । यत्तु संनिकृष्टतराः बहवः संयोगाः । विप्रकृष्टेऽपि विप्रकृष्टतरादल्पा इति संयोगाल्पत्वबहुत्वयोरननुगत-त्वात्परत्वापरत्वे अपि तथा स्यातामिति । तत्रेष्टापत्तिः । तादृशयोरपि संयोगाल्पत्व-बहुत्वयोः परत्वापरत्वासमवायिकारणत्वस्य त्वयाऽप्युररीकारात् । भूयोल्परवि-क्रियान्तरितजन्मत्वे विप्रकृष्टत्वसंनिकृष्टत्वे इति गुणकिरणावल्याम् ।

यत्तु रात्रिजाताव्यवहितदिनजातपरत्वापरत्वयोरपि क्रियाव्यभिचार इति । तन्न, द्वीपान्तरे तासां सत्त्वात् । तज्ज्ञानं तु नक्षत्रघटीयन्त्रादिना । यज्जन्मावच्छिन्नक्षणध्वंस-साधिकरणक्षणजन्म यत्तदपेक्षया संनिकृष्ट(ष्टं) , यत्प्रागभावावच्छिन्नक्षणजन्म यत्तदपेक्षया विप्रकृष्टमिति यावत् । यदा तु ध्वंसप्रागभावौ नात्यन्ताभावादतिरिच्येते, किन्तु घटानधिकरणघटावधिकपरत्वाश्रयकालीनेऽत्यन्ताभाव एव ध्वंसव्यवहारः । घटानधिकरणपरत्वाश्रयकालीनेऽस्मिन्नेव प्रागभावे एव ध्वंसव्यवहारः । घटान-धिकरणपरत्वाश्रयकालीनेऽस्मिन्नेव प्रागभाव इति(न)मीमांसकमतम् । तदा परत्वा-श्रयत्वाभिमतव्यक्त्यधिकरणक्षणापेक्षया बहुत्वं, क्रियायाः परत्वाश्रयाधिकरणापेक्षया चाल्पत्वं बोध्यम् । न चैवं ज्येष्ठे मृते चिरं जीवति च कनिष्ठे परत्वापत्तिः । ज्यायः कालीनक्रियाणामेव तथात्वाङ्गीकारात् । नित्यपदार्थे तु तादृशपरत्व-मिष्टमेवेति दिक् ।

## संस्कारनिरासाधिकारः

संस्कारोऽपि गुणान्तरमिति तार्किकाः। तत्त्वं तु कालवृत्त्यवृत्तिमूर्तामूर्तवृत्ति-वृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम्। स त्रेधा, वेगो भावना स्थितिस्थापकश्च। तत्र नोदनाभिघातजन्यकर्मासमवायिकारणको वेगः। यत्नवदात्मसंयोगो नोदना। वेगस्पर्शवद्द्रव्यसंयोगोऽभिघातः। स च वेगः पञ्चसु मूर्तेष्वेवास्ति। पुनः पुनः कर्मारम्भकः; वेगेन गच्छतीति प्रतीतेः प्रत्यक्षः। एककालक्षिप्तशरयोरयुगपत्पात-कल्प्यश्च। वेगे तीव्रत्वमन्दत्वे विना तदनुपपत्तेः। तत्रापि शरादौ कर्मणा वेगो वेगा-त्कर्मेति सन्तानक्रमेणोत्पद्यते इति नैयायिकाः। एक एव यावत्पातमिति वैशेषिकाः। तत्र मन्दोऽसौ स्पर्शवद्द्रव्यसंयोगमात्रेण नाश्यः, तीव्रस्तु तद्विशेषेण।

अनुभवस्य विप्रकृष्टकालिकस्मृतिं प्रत्यभिज्ञां च प्रति स्वस्वव्यापारान्यतराभावे हेतुत्वानुपपत्त्या कल्प्य आत्मविशेषगुणो भावना। तत्रेन्द्रियसंनिकर्षसचिव-संस्कारजन्या प्रत्यभिज्ञा। स च तत्तेदन्तोल्लेखिनी सोऽयमिति। केवलसंस्कारजन्या स्मृतिस्तत्तामात्रोल्लेखिनी स गौरितीति। संशयोपेक्षाज्ञानात्स्मृत्यनुदयादुपेक्षान्य-निश्चयत्वेन स्मृतिहेतुत्वम्। संस्कारं प्रति ज्ञानत्वेनैव हेतुताऽस्त्विति चेन्न; विनिगमनाविरहादुपेक्षास्थले संस्कारकल्पनावैयर्थ्याच्च। केचित्तु अनुद्बुद्धसंस्कारा-त्स्मृत्यनुदयादुद्बुद्धं तमपेक्ष्य स्मृतेरेव प्रत्यभिज्ञाहेतुत्वं वरमित्याहुः। स च संस्कार आदरादभ्यासाद्वा दृढो जायते, कश्चित्वसौ जन्मान्तरेऽपि स्थायी। तदुद्बोध-कान्याहुरभियुक्ताः—

'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति ॥

अत एवादृष्टमात्रोद्बुद्धसंस्कारोऽद्य जातो बालो, व्याप्तिं स्मृत्वा स्तन्य-पानस्येष्टसाधनत्वमनुमिमानस्तत्पाने प्रवर्तते। आदिना शब्दविशेषाभिनयादि। क्वचित्त्वयं प्रत्येकानुभवजन्योऽपि समूहालम्बनात्स्मृतिं जनयति। यथा गामानयेति प्रत्येकवर्णानुभवजनितसंस्कारैर्मिलित्वा पदत्वापन्नानेकवर्णालम्बनैका स्मृतिः। ततः प्रत्येकपदज्ञानाहितैर्मिलितैः संस्कारैर्वाक्यस्थानि सर्वाण्येव पदान्येकवाक्यभावमा-पन्नान्येकस्मृत्यारूढानि क्रियन्ते। स च सविषयत्वे मानाभावान्निर्विषय एव। न चैवं घटज्ञानजन्ये संस्कारे रोगप्रतीघातभूयःकालादिना नष्टेऽनन्तरं पटज्ञानजन्यसंस्कारेण घटस्मृत्यापत्तिरिति वाच्यम्। स्वजन्यसंस्कारसम्बन्धेनैवानुभवस्य स्मृतौ कारण-

त्वादिति केचित् । घटांशे उपेक्षा घटाद्यंशेवाऽनुपेक्षेति समूहालम्बने पटस्यैव स्मृते-स्तद्विषय एव संस्कारः प्रकल्प्यते। स्वजन्यसंस्कारसम्बन्धत्वे तु घटस्यापि स्मृतिः स्यात्। अंश उपेक्षाऽनुपेक्षात्मकं समूहालम्बनं तु सामग्रीसत्त्वाज्ञिःपरिपन्थि जायत एव न तु फलबलकल्प्यमिति परे । एतत्संस्कारनाशो रोग-मद - बहुकाल तीव्र-दुःखमरणादिति ।

स्पर्शवन्मात्रवृत्ति संस्कारत्वव्याप्यजातिमान् स्थितस्थापकः। स च घनतरा-वयवसंनिवेशवेगवन्तं स्वाश्रयमाकर्षणात्पूर्वावस्थातोऽन्यथाभूतं नियमतस्वां प्रापन्न-नुमीयते न तु प्रत्यक्षः। यथा चैत्रे(ण)धनुःशाखा वलान्नामिता भूयः पूर्वावस्थामेवापद्यते। विशीर्णमपि दन्तश्रृङ्गाद्यौषधादिना स्वस्थान एव संयुज्यते। भूयः संवर्तितमपि सूत्रं पुना ऋजु भवति। तदिदं प्रातिस्विकं कार्यमसमवायिकारणं कल्पयति स्थितस्थापकं संस्कारम्। न चायं वेग एवास्तु; तस्य पूर्वावस्थानापादकत्वात्। अयं च परमाणुषु नित्योऽन्यत्र त्वनित्यः। अत्र च कर्मजवेगेन कर्मणो, ज्ञानजेन भावनाया ज्ञानस्य, कर्मजस्थितस्थापकेन च कर्मण एव जननात् त्रयाणामनुगतं सजातीयोत्पादकत्वं संस्कारत्वव्यञ्जकमिति प्रतिपेदिरे। तत्र वेगस्तावत्कर्मसन्तानान्नातिरिच्यते, प्रमाणा-भावात् । पूर्वकर्मण एव जननावध्युत्तरोत्तरकर्मजनकत्वात् । कर्म न कर्मजन्यं, कर्मत्वादाद्यकर्मवत्; इति चेत्तन्नः, नोदनाजत्वस्योपाधित्वात् । पूर्ववेगेन यातीति प्रतीतिस्तु कर्मावान्तरजातिमादाय धान्येन धनीतिवद्वेगाभिन्नयानाश्रय इत्यर्थः। एवं शीघ्रं द्रुतं यातीत्यपि कालविशेष एव । 'शीघ्रमाशु द्रुतं कृतम्' इतिवत्। सर्वत्रासमवायिकारणे तु न किंचिन्मानम् । एककालक्षिप्तशरयोर्युगपत्पातोऽपि कर्मविशेषादेव ।

भावना त्वाधेयशक्तिरेव नात्मगुण इति निष्क्रक्ष्यते शक्तिवादे। स्थितिस्थापको-ऽप्यवयवसन्निवेश(विशेष)गत(त)या न सहजाया, अवनमनक्रियाविशेषार्हताया वा शक्तेर्नातिरिच्यते इत्ययमपि तत्रैव पन्थाः।

## धर्माधर्माधिकारः

धर्मस्तु यागादिजन्योऽन्तःकरणवृत्तिविशेष इति सांख्याः। ज्ञानपर्याय(:)चेतसो वासनेति शाक्याः। कार्यारम्भकाः पुद्गला इत्यार्हताः। यागादिजन्य आत्मगुण इति तार्किकाः। अपूर्वमित्येकदेशिनः। भट्टपादास्तु—

अन्तःकरणवृत्तौ वा वासनायां च चेतसः ।
पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि ॥
प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम् ।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः ॥
न च वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।
ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोऽन्यथा ॥
श्रुतसाधनसाध्यत्वत्यागेनाश्रुतकल्पना ।
प्रसज्येतास्य ताद्रूप्ये व्यतिरेके त्वरूपता ॥
तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ चापि पश्वादेरपूर्वं न ततः पृथक् ॥
शक्तयः सर्वभावानां भावशब्दैर्विशेषिताः ।
नोपाख्यायन्त इत्येवं नापूर्वे धर्मशब्दता ॥ इति ॥ श्लोकवार्त्तिक १९५-२००

नृगुणे=आत्मगुणे । अपूर्वजन्मनीति=अपूर्वं जन्म यस्येति अपूर्वपदार्थनिर्वचनम् । कर्मणः पूर्वमसत्त्वात्कर्मोत्तरमेव जननादित्यर्थः । प्रयोग इति=शक्तिग्रहनिदानलौकिकप्रयोगाभावादित्यर्थः । 'धर्मः क्षरति कीर्तनात्' इति प्रयोगस्तु यागगोदोहनादिष्वप्युपपन्नः शक्त्यात्मना स्थितानां तेषां क्षरणं नाश इत्यर्थः । शक्तिमति यागादौ नष्टे प्रमाणबलादात्मन्यपि तदङ्गीकारे न क्षतिः ।

ननु साङ्ख्यैः "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुत्या मनोवृत्तिविशेषाणां यागादीनां धर्मत्वोक्तौ को विरोधः सिद्धान्तेऽपि संकल्पात्मनो यागादेर्धर्मत्वाङ्गीकारादिति चेन्न; एतच्छ्रुतेर्मनोधीनतामात्रपरत्वात् तथा च स्मृतिः—'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति । सिद्धान्ते त्वात्मधर्मत्वं यागादीनाम् । 'स यदि पितृलोककामो भवति, संकल्पादेवास्य पितरः समुपतिष्ठन्त' इति । 'अयमात्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सः सत्यकामः सत्यसंकल्प' इति च श्रुतेः । पुण्यपुद्गलाः, परमाणवोऽन्ये वा केचित् । नाद्यः, व्यवहाराभावेन धर्मशब्दशक्तिग्रहायोगात् । नान्त्यः, मानाभावात् । यत्तु कर्त्रात्मगुणः फलहेतुरदृष्टं धर्म इति । तन्न: वैश्वानरी श्रीपूर्वेद्वाव्याग्नेरधर्मेऽति-

व्याप्तेश्च। न च साधनमित्यादि—ते=अन्तःकरणवृत्त्यादयः, पुरुषार्थस्य साधनं चोदनादिभिर्न ज्ञातुं शक्यत इत्यन्वयः। आदिना प्रत्यक्ष-व्याप्तिशास्त्रादिग्रहणम्। न चेति। वस्त्वन्तरं यागादिशक्त्यतिरिक्तं क्रमेण स्वर्गस्य साधनं, यागस्य साध्यम्। अतोऽन्यथा साध्यसाधनव्यतिरिक्तम्। एतद्विवरणं व्यतिरेक इत्यादि। व्यतिरेके= अतिरिक्तत्वे। अरूपता=निष्प्रमाणत्वम्।

यत्तु सुचरितमिश्राः। मत्प्रत्ययान्तात् धृञो यौगिको धर्मशब्दः। तत्र धातोः प्रीतौ प्रत्ययस्य तु तत्साधने शक्तिरित्याहुः। तन्न; प्रीतिसाधने लौकिके भोजनादावतिव्याप्तेः अजः पङ्कजादिपदवद्योगरूढोऽयमित्यन्ये। योगाप्रतीतेस्तु रूढ एवायम्। तत्त्वं तु समानाधिकरणनिषेधाविषयत्वे सति फलार्थविहितत्वम्। श्येनादावतिव्याप्तिं वारयितुं निषेधाविषयत्वे सतीति। श्येनोऽपि धर्म इति चेन्न; अपसिद्धान्तात् तथाहि 'चोदनालक्षणोऽर्थो धर्म' (जै० सू० १.१.२) इति धर्मलक्षकसूत्रस्यार्थपदं हि श्येनव्यावर्तकमुक्तं भाष्यवार्तिकादौ। एतेनोपधेयसंकरेऽप्युपाधेरसंकराद्धर्माधर्मोभयरूपताप्यस्यापास्ता। अग्नीषोमीयहिंसायामपि तथापत्त्या जीयेत साङ्ख्यैः। अथ तत्र लौकिकहिंसायां चरितार्थो निषेधो न वैधीं तां गोचरयतीति चेन्न; विरोधाभावात्। एकस्येष्टानिष्टजनकत्वं विरुद्धं चेत्, तुल्यं प्रकृतेऽपि। अथात्र श्येनादिष्टं वैरिमरणं, तस्माच्चानिष्टमिति चेद्पुंव्यापारे तस्मिन्निषेधायोगात्। कस्तर्हि निषेधविषयः? अवहितःशृणु। 'अभिचरन्' इत्यभ्युपसृष्टधातोः 'रणे यानमभिक्रम' इतिवद्वैरिमरणोद्देश्यकतदभिमुखगमनपूर्वकशरक्षेपादिपुंव्यापारवाचित्वेन तत्र निषेधसंभवात्। अतोऽग्निहोत्रादिभावनायां करणेतिकर्तव्यतांशयोर्विधिगोचरत्वेन धर्मत्ववच्छ्येन भावनाया भाव्यांशस्य निषेधगोचरत्वेनाधर्मत्वम्। अस्तूभयरूपं तर्हीति चेन्न; उक्तसूत्रभाष्यवार्तिकाद्यालोचनेनांशतोऽपि निषेधानालिङ्गितवैधपदार्थस्यैव धर्मत्वावगमात्। अंशतोऽपि तदालिङ्गितस्याधर्मत्वावगमाच्च। एतेन परापकारित्वात्तामसधर्मत्वमप्यपास्तम्। स त्वभिचारादीष्टोपायशून्यकेवलादृष्टद्वारत्वेन परापकारार्थो विहितो, 'रिपवः संक्षयं यान्ती'ति रिपुनाशार्थं क्रियमाणो दुर्गास्तवपाठादिः। अत एव हिंसालक्षणेऽदृष्टाद्वारकत्वमुक्तमभियुक्तैरिति दिक्।

यजमानाधिकारिकाग्नीषोमीयहिंसादेरप्य(प्य)र्त्विगधिकारिकनिषेधविषयत्वात्तत्राव्याप्तिवारणाय समानाधिकरणेति। स च धर्मो जातिद्रव्यगुणक्रियाभेदाच्चतुर्धा। 'दध्नेन्द्रियकामस्य जुहुयादि'त्याद्यः। 'गोदोहनेन पशुकामस्य प्रणयेदि'ति

परः। सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते' इत्युक्तेर्गोदोहनशब्दो द्रव्यवाची। 'यदि कामयते वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयादित्यन्यः। यागादिरन्त्यः इदं च यत्साधनत्वेन यदधिकारिकत्वेन यद्विहितं तन्निरूपितमेव तस्य पत्नीपुत्रादिवत्सम्बन्धिकं धर्मत्वम्। अतो द्रव्यादीनामेव धर्मत्वं, न तज्जन्यापूर्वस्य शक्तिग्रहासंभवात्। यागादिषु तु तत्कर्तरि धर्ममनुतिष्ठति, सुखभोक्तरि धर्मफलं भुङ्क्ते इति लोके। 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्नि'तिवेदे च व्यवहाराद्धर्मपदशक्तिग्रहः। लिङ्गसंख्याव्यत्ययस्य छान्दसत्वाद्यज्ञशब्दसामानाधिकरण्यम्। कृतयागादिषु धार्मिकपदं तु भूतपूर्वगत्या शक्तिशक्तिमतोरभेदेन यागादेरेवशक्त्यात्मनाऽवस्थानाद्वा। एतदेव सर्वमभिप्रेत्योचुर्भट्टपादाः—

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेन न ताद्रूप्येण धर्मता॥
श्रेयः साधनता ह्येषां नित्यं वेदात्प्रतीयते।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥ इति॥

तथा—पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम्।

चित्रागोदोहनादीनां तान्युक्तानि फलानि च।
तस्मात्तेष्वेव धर्मत्वं धर्माणीति च दर्शनात्॥

एवं चौर्यादिकर्तरि अधर्मं करोतीति, दुःखिन्यधर्मफलं भुङ्क्त इति च व्यवहारदर्शनादधर्मपदस्यापि शक्तिग्रहः तत्त्वं तु निषेधविषयत्वम्। धर्मत्ववदेतदपि ससंबन्धिकमेव॥

॥ इति श्रीमीमांसकशंकरभट्टात्मजनीलकण्ठकृतौ भाट्टार्के गुणनिरूपणम्॥

---

# कर्माधिकारः

अथ कर्म। तत्त्वं तु व्यवहारसिद्धो जातिविशेषः, क्रियाशब्दोऽपि एतत्पर्यायः। तच्च योग्यमूर्तद्रव्याश्रितम्, बाह्येन्द्रियग्राह्यं स्पन्दाख्यं प्रत्यक्षम्। सर्पश्चलतीति प्रतीतेः अनेन तत्कार्याभ्यां संयोगविभागाभ्यां तदनुमीयत इति गुरुमतमपास्तम्। अदृष्टवदात्मसंयोगादपि तयोरुपपत्तेः भूमावपि तत्सत्त्वेन भूमिश्चलतीत्यापत्तेश्च भाष्येऽतीन्द्रियत्वोक्तिस्त्वतीन्द्रियसमवेतक्रियापरेति। मनोनिष्ठं त्वनुमेयम् आत्मगतं तु संकल्पत्यागादि मनोग्राह्यम् शब्दनिष्ठाभिधाव्यापारस्य शब्देनोपस्थितिः।

यत्तु संकल्पादेर्गुणत्वमभिधायाश्च शक्तित्वं, कर्म तु स्पन्द एवेति। तन्न, तथा सति कर्मक्रियाशब्दयोः परिभाषा रूढिर्वा घटेत। न च कृञो भावे मनिन्शप्रत्यययोर्विधानेन यौगिकत्वसंभवे सा युक्ता। क्रियात्वे तु "कर्मणैव हि संसिद्धिमास्थिता जनकादयः।" 'कुरु कर्मैव कौन्तेये'ति। 'न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्' 'ब्रह्मण्याधाय कर्माणि' इत्यादिर्भगवतो व्यवहारः प्रमाणम्। 'भावार्थाःकर्म शब्दा' इत्यादिः सूत्रादिकृतां, एवम् 'संकल्पः कर्म मानस'मित्यादिः कोशादीनां च। मानसं मनोग्राह्यम्। आलंकारिका अप्यभिधालक्षणयोः क्रियात्वमाहुः। गुणत्वे तु न किंचिन्मानम्। त्यागसंकल्पादीनां ज्ञानत्वे इच्छात्वे वाऽविधेयत्वापत्तिश्च। प्रमाणाजन्यत्वाच्च न ज्ञानत्वम्। मनो मानमिति चेन्न; तस्य बहिरस्वातन्त्र्येण द्रव्यस्व(रू)त्वागोचरत्वात्। तस्मात्संकल्पत्वाद्यपि पदार्थविभाजकक्रियात्वव्याप्यम्। तदाहुर्भट्टपादाः—

'न परिस्पन्द एवैकः क्रियातः कणभोजिवत्।' इति॥ कणभोजी - कणादः। स्पन्दस्तु अनित्यमात्रवृत्ती कर्मत्वसाक्षाद्व्याप्यजातिमान्। संयोगसमवायिकारणमात्रवृत्ती तादृशजातिमान्वा। संयोगस्थाने विभागपदं वा देयम्। स च प्रयत्नगुरुत्वसंयोगकारणको एकमूर्तमात्रवृत्ती। क्रिया, ततो विभागः, पूर्वसंयोगनाश, उत्तरसंयोगोत्पत्तिरिति चतुःक्षणमात्रस्थायी। स्वजन्यसंयोगनाश्यो निर्गुण(ः)संयोग-

विभागयोर्निरपेक्षः कारणम्। यद्यपि समवायिकारणादीनपेक्षते तथापि स्पन्दोत्पत्त्यनन्तरोत्पत्तिकं नान्यदपेक्षत इत्यर्थः। स्वपराश्रयकार्यारम्भकः, तच्च कार्यं संयोगविभागावेव न तु वेगः। तस्य स्वाश्रयमात्रनिष्ठत्वात्। सजातीयानारम्भकश्च। कुतः। क्लृप्तेन संयोगस्पन्दयोः कार्यकारणभावेनोपपत्तौ स्पन्दत्वेन कार्यकारणभावकल्पनाऽयोगात्। एकस्यां दिशि एकेनैव स्पन्देन संयोगजननोपपत्तेर्न स्पन्दवति स्पन्दान्तरकल्पना। अथ द्वाभ्यामपि ताभ्यां विरुद्धयोर्दिशोर्नानासंयोगविभागौ न(?) जननीयाविति चेन्न; तादृशसंयोगविभागयोरनुपलम्भेन तत्कारणतया स्पन्दवति तत्कल्पनाऽयोगात्। विद्यमानाभ्यामपि स्पन्दाभ्यां परस्परप्रतिबन्धात्तादृक्कार्यानुत्पत्तिरिति चेन्न; कल्पनागौरवात् स्पन्दान्तराभाव एव वरम् शरीरस्पन्दे तु शरीरवदात्मसंयोगोऽसमवायिकारणं, यत्नो निमित्तकारणम्। पार्थिवादिपदार्थेषु तु नोदनाभिघाताभ्यां स्पन्दः। गुरुत्वद्रवत्वसंस्कारपर्यायशब्दे शक्तिवेगाद्व्यस्तान्वापेक्षमाणः संयोगविशेषो नोदना। तेन च घनोदकयोः कर्म।

यस्तूक्तकारणकनोदनाद्यभावेऽपि चुम्बकपाषाणसंनिधानाल्लोहे; अभिमन्त्रितचषकस्य चोरसमीपगत्यनुकूलः मन्त्रपाठाच्च विषपर्वणि स्पन्दः। तत्राहंवदात्मसंयोगमात्रं चुम्बकमन्त्रादिगतः शक्तिविशेषो वा कारणम्।

वैशेषिकास्तु उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् स्पन्दः पञ्चधा। अत्रोर्ध्वदेशसंयोगत्वाधःसंयोगत्वनिष्क्रियावयवाभिमुखसंयोगत्वनिष्क्रियावयवाभिमुख्यविरोध्यनेकदिक्संयोगत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया सिद्धा उत्क्षेपणत्वाद्याः पञ्च जातय एवेति केचित्। परे तु, सौधादेरूर्ध्वद्वारेण कक्षान्तरगतादुत्क्षेपण प्रवेशननिष्क्रमणत्वानां साङ्कर्यापत्तेर्नोत्क्षेपणत्वाद्याः चतस्रो जातयः। गमनत्वं तु उत्क्षेपणत्वादिचतुष्टयजन्यसंयोगत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदिका जातिरेवेत्याहुः। अन्ये तु, तादृशसंयोगत्वेन कार्यतायां मानाभावादुत्क्षेपणत्वाद्या उपाधय एव। ते च चत्वारो निरूपिता एव। तद्भिन्नकर्मत्वमेव गमनत्वम्।

वस्तुतस्तु, अनुगतप्रतीतिसिद्धं जातिपञ्चकमेवोत्क्षेपणत्वादि। ऊर्ध्वाधोदेशविशेषसंयोगजनकतया तत्सिद्धिरिति चेन्न; ऊर्ध्वत्वाधस्त्वयोरवधिभेदेनैकत्रैव सत्त्वेन तद्घटितसंयोगसंयोगत्वस्य कार्यतावच्छेदकत्वात्। स एव कंचिदपेक्ष्याधः, इतराच्चोर्ध्वः। भ्रमणत्वमपीतोऽतिरिच्यते, नानाकर्मसमवेतत्वात्। संनिवेश-

विशेषविशिष्टनानाकर्मणां तद्व्यञ्जकत्वप्रतीतेश्च । अतीतानागतक्रियाणामप्रतीतावपि सन्तन्यमाननानाश्रयत्वेऽपि गृह्यते वनता, तथेति बहुवृक्षवर्तिजातिविशेष एव वनत्वमिति केचित् । व्यक्तं नानात्वमेव तासां भ्रमणत्वव्यञ्जकता दर्शनबलादङ्गीकार्या । यथाहुर्भट्टपादाः—यथा वा भ्रमणत्वादि भङ्गिष्ववयवेष्वपि ।

परे तु, न जातिः, निकटगतस्य वनबुध्यभावात् । न हि दूरस्थैर्गृह्यमाणा निकटस्थैर्न गृह्यत इति संभवति । नानादिक्संयोगत्वावच्छिन्नकार्यतावच्छेदकतया च भ्रमणत्वजातेः सिद्धिः । अत एव नानादिक्संयोगव्यङ्ग्या सा । एतेन गमनविशेष एव भ्रमणमित्यपास्तम् । उत्तरदेशसंयोगव्यङ्ग्यत्वाच्च तस्य । तथोर्ध्वज्वलनत्वमपि जात्यन्तरमेव । वह्निनिष्ठमुत्क्षेपणमेव तदिति चेन्न; तस्य चेतनधर्मतया वह्नाव-संभवात् । एवं पतनत्वमपि जात्यन्तरम् । तथा प्रक्षेपोऽप्रक्षेपणमेव । तदेव द्रवद्रव्य-निष्ठमन्याभिमुखं प्रोक्षणम् । 'हिरण्यशकलैरग्निं प्रोक्षती'त्यत्र गौणी । रेचनत्वमपि बहिःसंयोगजननक्रियात्वमेव न जातिः । प्रवेशनत्वमप्यन्तःसंयोगजनकत्वम्; रेचये-दित्यस्य बहिर्गमयेदिति, प्रविष्ट इत्यस्यान्तर्गत इति च विवरणात् । निष्क्रमणमप्यन्तः-स्थस्य बहिर्गमनं; स्यन्दनमपि (द्रव)द्रव्यस्य निष्क्रमणम् । जीवच्छरीरतदवयवगतः स्पन्द एव चेष्टा । तत्त्वन्तु प्रयत्नवदात्ममनःसंयोगासमवायिकारत्वम् । उत्पत्तित्वमपि क्रियात्ववान्तरजातिरिति रूपताजन्यतादिवदित्यादिना कृत्यधिकरणे भट्टपादाः । एवं स्थितित्वमपि, एवं विनाशत्वमपि । तथा चापोहवादे—'अनित्यत्वं विनाशाख्यक्रिया-सामान्यमुच्यत' इति । एवञ्च गौरुत्पद्यते, उत्पत्स्यते, उदपादि, स्थास्यति, तिष्ठति, अतिष्ठत्, नश्यति, नंक्ष्यति, अनंक्षीत्, नष्ट इत्यादावुत्पत्त्यादिक्रियायामेव भविष्य-त्वाद्यन्वेति । अन्यथाऽत्र गवादीनामकर्तृत्वेन 'अनभिहिते कर्तरि' तृतीयापत्तिः । असिद्धकर्तृकत्वेन करोत्यर्थवाचित्वं परं नास्ति । तदाहुर्भट्टपादाः—

सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति ।
सामानाधिकरण्येन करोत्यर्थो विगम्यते ॥ इति ।

अस्ति-तिष्ठति - नश्यतीत्यादावप्यसिद्ध एव कर्तेति राणक एवेति नेह विस्तरः ।

तत्र भविष्यत्त्वं वर्तमानप्रागभावप्रतियोगित्वम् । वर्तमानत्वं तु क्रियागता

जातिरेव। न तु स्वावच्छिन्नकालत्वं, अननुगतत्वात्। अतीतत्वं तु ध्वंसप्रतियोगित्वम्। क्रियायां क्रियायोगो नास्तीति चेत्सत्यम्; क्रिया यातीति प्रत्ययापत्तेः स्पन्दो न युज्यते, क्रियान्तरं तु युज्यते. क्रियोत्पद्यते नश्यतीति प्रत्ययात्। सार्वजनीनः प्रत्यय एव भगवान् वस्तुनोऽङ्गीकारे शरणः।

क्षणत्वं तु स्ववृत्तिपदार्थप्रागभावानाधारत्वम् इति केचित्, तन्न; अननुगमात्। न च कालोपाध्यघटितकालोपाधित्वम्। मुहूर्तादीनां क्षणादिघटितत्वादिति वाच्यम्। समुदायसमुदायिनोरनतिरेकात्। समूहालम्बनज्ञानविशेषविषयत्वं समुदायत्वमिति चेन्न; समुदायिन्यतिप्रसङ्गात्। ज्ञानविषयतापर्याप्त्यधिकरणमिति चेत् पर्याप्तिः का? स्वरूपसम्बन्धविशेष इति चेत्सोऽप्यतिरिक्तो वा तत्स्वरूप एव वा? आद्येऽपसिद्धान्तः। अन्त्ये तद्दोषतादवस्थ्यम्। किं च, ज्ञाननाशे मुहूर्तादावव्याप्तिः। क्षणस्याचाक्षुषत्वेन तत्समुदायघटीप्रहरादेरचाक्षुषतापत्तिश्च। परमाणुपुञ्जो घटादिरिति वादिनां बौद्धानां घटादेरिव। अथ समुदायोऽतिरिक्त एवेति चेन्न; समुदायिक्षणनाशे निराधारत्वेन तस्यावस्थानायोगात्। न च क्रियाया विभागस्य च स्थायित्वेऽपि विभागविशिष्टा सा क्षण इति वाच्यम्। पूर्वेणोत्तरेण वा संयोगेन उपहिताया अपि तस्याः क्षणत्वापत्तेः। इष्टापत्तौ एकाकारानुगतप्रतीतेर्बाधः। अतः क्रियावान्तरजातिरेव क्षणत्वम्॥

इति श्रीभट्टशंकरात्मजनीलकण्ठकृतौ भाट्टार्के कर्मनिरूपणम्॥

---

# सामान्यनिरूपणो सामान्याधिकारः

अथ सामान्यम् । तत्त्वं तु नित्यत्वे सत्यनेकवृत्तित्वं, अनुगतप्रतीत्यसाधारण-कारणत्वं वा । तच्च खण्डमुण्डादिषु गौरयमयं च गौरित्यनुगतप्रतीतिसिद्धम् । खण्डत्वमुण्डत्वादीनां गोबुद्धिजनकत्वायोगात् । न हि या खण्डा सैव मुण्डेति धीरस्ति, किन्तु खण्डा गौर्मुण्डा गौरिति । तथा च भट्टपादाः—

निष्प्रमाणे च सामान्ये वृत्तिः शब्दानुमानयोः ।
नैव स्यान्न हि सम्बन्धो भेदैरानन्त्यतो भवेत् ॥
अनुभूततया चासौ पुरुषस्योपयुज्यते ।
जातिव्यक्त्योः स्वसम्बन्धेनानुभूत्या प्रयोजनम् ॥ इति ॥

भेदा विशेषाः । सामान्याभावे खण्डायां गोपदशक्तिग्रहेऽपि मुण्डायां तदग्रहेण गोशब्दव्यवहारो न संभवति । एवं तेषां व्याप्यव्यापकभावाभावेन महानसीयधूम-वह्न्योः साहचर्यग्रहेऽपि पर्वतीययोस्तदग्रहान्नानुमानस्यापि संभव इत्यर्थः । तच्च सामान्यं न व्यक्तेरतीव भिन्नं प्रत्यक्षेण गृह्यते । तथासति गोत्व-पशुत्वादौ जातित्वो-पाधित्वविवादाभावापत्तिः । एकस्मिन्नेव हि पुरोवर्तिनि पिण्डे 'गौरयं, नाश्वः' इति व्यावृत्ताकारा गौरयमित्यनुगताकारा चेत्यस्ति प्रतीतिद्वयम् । तत्राद्याया विषयो व्यक्तिरित्युच्यते । द्वितीयायास्तु जातिरिति । अतएव गौरयं, गौरयमिति गवाभिन्नमेव गृह्यते । एवञ्च प्रतीतिबलाद् भेदावेवाङ्गीकार्यौ । आपेक्षिक-दीर्घत्व-ह्रस्वत्व-बहुत्वाल्पत्व-गुरुत्व-लघुत्वाच्च तयोरविरोधात् । इदं रजतं, नेदमितिवद्बाधा-भावाच्च । न हि खण्डा न गौरिति धीरस्ति; किन्तु न मुण्डेति । किं चापर्यायेण जायमानादित्थं गौरिति धीद्वयादेकमेव वस्तुद्वयात्मकं गम्यते । तत्र सामानाधि-करण्यादभेदः, अपर्यायाच्च भेदः ।

यथोचुः—सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।
जायते द्व्यात्मकत्वेन विना सा च न सिध्यति ॥

विशेषमात्रे दृष्टे च न सामान्यगतिर्भवेत् ।
सामान्यमात्रबोधे तु निर्निमित्ता विशेषधीः ॥
न चाप्यन्यतरा भ्रान्तिरुपचारेण वेष्यते ।
दृढत्वात्सर्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥ इति ॥

एवमवयविनः स्वरूपेणावयवैरभेदः, अवयवान्तररूपेण त्ववयवान्तरैर्भेदः । तथा धर्मिणो द्रव्यस्य स्वरूपेण रूपादिभ्योऽभेदः, रसादिधर्मान्तररूपेण तु भेदोऽपि । संयोगविशेषा एव पटत्वमापद्यन्ते, तेनावयवानामेवावस्थान्तरमवयवी, न द्रव्यान्तरम् ।

नन्वेवं पुद्गलपुञ्जो घट इति वदद्भिर्जितं बाह्यैरिति चेन्न; पटस्य तन्तवो, नरस्य शिर इति प्रतीत्या भेदस्याप्यङ्गीकारात् । एतेन कारणगुणानां कार्यगुणारम्भकत्वमपास्तम् । रूपद्वयाभावात् । पटत्वमापन्नानां तन्तूनामेव रूपं पटीयत्वेनानुभूयते न पृथक् । नीलकृष्णतन्त्वारब्धेऽपि पटे तेषामेव रूपाणां प्रतीतिर्नतु रूपान्तरस्य चित्रस्य । चित्रः पटो न रक्तः पीतो वेति प्रतीतिस्तु नानारूपाण्येवावगाहते । चित्रशब्दस्य लोके नानापर्यायत्वदर्शनात् । मिश्रैस्तु पक्षे समवायोऽप्यङ्गीकृतः । तेन केवलभेदपक्षोऽपि तेषां संमतो भाति । अत एवाकृतिनये--'सर्वं समञ्जसं ह्येतद्वस्त्वनेकान्तवादिन' इति ।

भेदाभेदपक्षमुक्त्वा परितोपाख्लक्षणा वाऽभ्युपेतव्येति तैर्भेदपक्ष एवोक्तः । नन्वन्योन्याभाव एव सामान्यमतद्व्यावृत्तिरित्यर्थः । भवति हि गौरयमिति ज्ञानस्यागोव्यावृत्तोऽयमिति विषय इति चेन्न; गोत्वादेर्भावत्वेन बोधात् । आत्माश्रयाच्च । गोत्वसामान्यग्रहं विना सर्वगोप्रतियोगिकान्योन्याभावग्रहायोगात् । ग्रहे वा शबलाऽप्यगौरेव स्यात् । व्यक्त्यन्तरभेदस्य तत्रापि सत्त्वात् । तथा चाहुः--

अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्ववस्त्वेव तैरुक्तं मन्यापोहगिरा स्फुटम् ॥ इति ॥

सौगतास्तु, अश्वादिव्यावृत्तौ ।गोव्यक्तिनिष्ठः क्लृप्तो भेदकूट एव गोत्वं, त्वक्लृप्ता जातिः । तस्य च प्रमेयत्वेनेदन्त्वादिनेव गोत्वरूपेणापि ग्रहे न प्रतियोगिधियोऽपेक्षा । सा त्वभावत्वप्रकारकग्रह एव । नन्वन्याग्राह्याख्याभावरूपं गोत्वमनुपलब्ध्वा गृह्यते, चाक्षुषं तदिति चेन्न; चक्षुषोऽनुपलब्धे योग्यतासंपादकत्वेनान्यथासिद्धत्वादित्याहुः ।

आचार्यास्तु, एक एव धर्मी भावत्वस्याभावत्वस्य चाश्रयो, न त्वभावो नाम तत्त्वान्तरम् । ततश्चाश्वादिनिवृत्त्यात्मकोऽभावो न तद्व्यक्तिस्वरूपमिह विषयोऽननुगतत्वादिति जातिरूपं सामान्यमेव तदभावः । सर्वव्यक्तिसमूह एव सामान्यधिय आलम्बनमिति चेन्न; सर्वव्यक्तिज्ञान एव सामान्यधीप्रसङ्गात् । न चैतत्कस्यचित्संभवति । यत्किञ्चद्व्यक्तिसंनिकर्षादेव सर्वव्यक्तिभानमिति चेन्न; घटसंनिकर्षे पटस्यापि भानापत्तेः । सामान्याङ्गीकारे तु नातिप्रसङ्गः । प्रकारीभूतसामान्याश्रयत्वेन नियमात् ।

यथोचुः--भावान्तरमभावो हि पुरस्तात्प्रतिपादितः ।
तत्राश्वादिनिवृत्त्यात्मा को भाव इति कथ्यताम् ॥
तथा—तस्मात्सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम् ।
गोबुद्धिस्तन्निमित्ता स्याद्गोत्वादन्यत्तु नास्ति तत् ॥ इति ॥

सामान्येषु च तत्त्वं नित्यत्वे सत्यनेकव्यक्त्यात्मकमुपाधिरेव । तेनैवोपपत्तावतिरिक्तकल्पने मानाभावात् । वस्तुत्वं तु तद्गतमनुगतप्रतीतेर्जातिरेव न तु प्रमाणविषयत्वं, प्रमाणाभावदशायामवस्तुत्वापत्तेः । पृथिवीत्वादिजातीनामपि प्रायोऽनुगतव्यवहारादेव सिद्धिः । तां विना तदसंभवात् । नत्वन्त्यावयवसंयोगविशेषरूपानुगतसंस्थानकृतः; तदनुगमकस्यापि जातिं विनाऽसिद्धेः । गन्धसमवायिकारणत्वादि तु पाषाणादावव्याप्तं, तत्राप्यनुद्भूतवा(वो)ग्ये तु मानाभावः । तद्भस्मनस्तु द्रव्यान्तरत्वादेव तत्र गन्धोपलब्धिर्नानुपपन्ना ।

केचित्तु, संयोगविशेषगतामेव जातिं घटत्वाद्याहुः । स च व्यवहारः सर्वप्रमाणजन्यो न प्रात्यक्षिक एव । तथात्वेऽतीन्द्रियेषु तदसिद्धेः । कार्यता-कारणतावच्छेदकतया जातिं साधयतामपि स एव शरणम् । तदवच्छेदकतया तदङ्गीकारेऽङ्गुल्यादावन्ततो भ्रमिजनके निर्झरविशेषजलादौ दण्डत्वापत्तिः । एवं दण्डेऽङ्गुलित्वजलत्वयोः । अत एव वनस्थदण्डादौ अनन्यथासिद्धनियतपूर्ववृत्तित्वाभावेऽपि सर्वप्रमाणगम्याद्व्यवहारादेव तज्जातेः सिद्धिः ।

अखण्डोपाधिः शक्तिर्वा कारणत्वमिति मते नावच्छेदकापेक्षेति केचित् । तन्न; सखण्डाखण्डत्वपे(प)क्षेऽवच्छेदकापेक्षायां विशेषाभावात् । सा च जातिस्तत्तद्व्यक्तिग्राहकप्रमाणग्राह्या, सर्वव्यक्तिषु प्रत्येकं समवेता, नित्यैका च ।

अत्र सौगताः, उत्पन्ने घटे कथं घटत्वप्रतीतिः ? न तावत्तेन घटेन सहैवोत्पन्नं; अनित्यत्वापत्तेः । नाप्यन्यत आगतम्; अमूर्तत्वेन क्रियाऽसंभवात् । यत आगतं तद्व्यक्तावनुपलम्भापत्तेश्च । न चांशेन तत्रास्ते; निरंशत्वात् । न च व्यापकं, पटे घटत्वस्य घटे च पटत्वस्य प्रतीत्यापत्तेः । सुतरां समवायैक्यवादिनाम् । यथोचुः—

न याति, न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥इत्याहुः ॥

तन्न; व्यापकत्वाङ्गीकारात् । पटे घटत्वाद्यग्रहणं तु पटत्वादिनाऽभिभवात् । वनत्वं तु न जातिः, निकटस्थेनाग्रहणात्, जात्यन्तरग्रहे संनिकर्षवत् । दूरत्वमेवात्र सामग्रीति चेन्न; दोषत्वेन क्लृप्तस्यास्य प्रमासामग्रीत्वायोगात् । गोत्वादिग्रहविसाम-ग्रीत्वेऽपि वनत्वग्रह एव सामग्रीत्वमस्तु, इति चेत्स्यादेवं यदि वनत्वमुपाधिर्न स्यात् । स चैकदेशस्थवृद्धवृक्षत्वमेव, पांथोपकारविशेषकर्तृत्वं वा । राशित्वं तु एकदेशस्थ-संयोगविशेषावच्छिन्नानेकधान्यादिपदार्थत्वम् । बहुत्वविशिष्टयुद्धोद्यतप्राणित्वं सैन्यत्वम् । एकदिग्गतानां निरन्तराणां पदार्थानां सन्निवेशविशेषः पंक्तिः । सन्निवेश-विशिष्टाः पदार्था वा बहुत्वविशिष्टाः एकदेशावच्छिन्नाः प्राणिनः, प्राणिबहुत्वं वा कुलत्वम् । तदेव च यूथत्वम् पशुत्वविशिष्टं तु तत्समाजत्वम् । तद्भिन्नप्राणिमत्वं समाजत्वमित्याद्यूह्यम् ।

विप्रत्वादिकं तु न तावदध्ययनादिकर्तृत्वं, क्षत्रियादावतिप्रसङ्गात् । नापि याजनादिकर्तृत्वं, उत्पथवर्तिशूद्रादावतिप्रसङ्गात् तादृशविप्राध्यापनाच्च । तद्विधि-प्रवृत्तौ विप्रत्वस्योपजीव्यत्वेनात्माश्रयाच्च । अतो जातिरूपमेव तच्चाक्षुषञ्च ।

केचित्तु, क्षत्रियादिसंवलिते विप्रे चिरतरं निभालयतोऽपि विप्रत्वाग्रहात्—

"सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः ॥
विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशस्त्रियां ।
अम्बष्ठः शूद्र्यां जातो, निषादः पारसवोपि वा ॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्त्वेष विधिः स्मृतः ॥
ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥

क्षत्रायां मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्यां जनयामास वै सुतम् ॥
माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥
जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ इति स्मृतेश्च ।

न चाक्षुषी विप्रत्वादिजातिः । अस्यार्थः—विप्रेणोढा क्षत्रिया मूर्धावसिक्तं सूते, साऽपि विप्रोढाऽन्या(न्य)मित्येवं परम्परया क्षत्रियस्य विप्रानन्तरत्वात्पञ्चमे युगे कन्यायां पुत्रे वा जातेरुत्कर्षो विप्रत्वं जायते। एवं विप्रोढा वैश्याम्बष्ठं सूते, साऽपि विप्रोढाऽन्यमिति परम्परायां एकान्तरितत्वादपि वाशब्दसूचिते, षष्ठे शुद्धो विप्रो भवति । एवं विप्रशूद्रासंपर्कजपारसवजातीयस्त्रीपरम्परायां द्व्यन्तरितत्वात्सप्तमे विप्रः । एवं क्षत्रियोढवैश्याजन्यमहिष्या कन्यापरम्परायाः क्षत्रियैरेवोद्वाहे पंचमे क्षत्रियोऽनन्तरितत्वात् । एवं क्षत्रियशूद्रासंयोगजोग्रकन्यापरम्परायाः क्षत्रियैरेवोद्वाहे षष्ठे क्षत्रियः तथा वैश्यशूद्रासंयोगजकरणाख्यकन्यापरम्पराया वैश्यैरेवोद्वाहे पञ्चमे वैश्यः ।

केचित्तु, युगे दम्पतीरूपे पञ्चमे षष्ठे सप्तमे वा सति षष्ठसप्तमाष्टमान् विप्रान् (क्षत्रियम्)। क्षत्रियवैश्यासंयोगे परम्परायां षष्ठे युग्मे सति सप्तमं क्षत्रियम् । एवं वैश्यशूद्रासंपर्के पंचमे युग्मे सति षष्ठं वैश्यमित्याहुः ।

तन्न; सतिशब्दाध्याहारापत्तेः । युगपदन्तु कन्यापुत्ररूपापत्यद्वित्वपरतयाऽप्युपपद्यते। व्यत्यय इत्यादि। कर्मणां व्यत्यये विपर्यासे यदीयं कर्म करोति, तत्साम्यं भवति । तत्सम्बन्धिविधिनिषेधार्हो भवतीत्यर्थः। तज्जातिं प्राप्नोतीति केचित् । उभयथाऽप्यनुष्ठाने न कोऽपि विशेषः। यथा विप्रसन्ततिः क्षात्रकर्मणा च जीवन्ती पञ्चमं क्षत्रियमेव जनयति । वैश्यकर्मणा चेत्षष्ठं वैश्यम्। शूद्रकर्मणा चेत्सप्तमं शूद्रम्। तथा क्षत्रियसन्ततिर्वैश्यस्य शूद्रस्य वा कर्मणा चेत्पंचमे वैश्यं,षष्ठं शूद्रं। वैश्यसन्ततिः शूद्रकर्मणा चेत्पञ्चमं शूद्रम् ।

व्यत्यय इत्यादि। यद्वा विप्रादिपुत्रपरम्परया क्षत्रियकन्याया एवोद्वाहे पञ्चमः।

क्षत्रिय एव। वैश्यकन्योद्वाहे षष्ठे वैश्यः। शूद्रकन्योद्वाहे सप्तमः शूद्रः। क्षत्रियपुत्रादीनां वैश्यकन्योद्वाहे पञ्चमो वैश्यः। शूद्रकन्योद्वाहे षष्ठः शूद्रः। वैश्यपुत्रादीनां शूद्रकन्योद्वाहे पञ्चमः शूद्रः। विप्रक्षत्रियवैश्यसन्तत्या प्राप्ता क्षत्रियवैश्यशूद्रजातिः। अधरा वैपरीत्येतूत्तरा। तदधरप्रातिलोमानुलोमवदसत्सच्च ज्ञेयमित्यर्थः तस्मात्प्रयाजत्वादिवच्छास्त्रगम्या एव विप्रत्वादिजातय इत्याहुः। विज्ञानेश्वरादीनामप्यमुमेवाशयमुन्नयामः। भट्टपादास्तु--यथा गवि गौरवं भवति तथा ब्राह्मण्यां ब्राह्मणाद्ब्राह्मणो भवति; गोत्ववच्च ब्राह्मण्यमपि चाक्षुषमेव। तद्व्यञ्जकं परं ब्राह्मणजन्यत्वम्। अनादिसंसारगतबीजाङ्कुरन्यायेन च जनकगतब्राह्मण्यज्ञानस्य जन्यगतब्राह्मणज्ञाने कारणत्वे त्वामाश्रयः। पूर्वोक्तस्मृत्युक्तानि विप्रादिवर्णानुलोमप्रतिलोमजात्युत्कर्षापकर्षव्यञ्जकान्यपि लोकसिद्धान्येव। शब्दसाधुत्वाज्ञापक(शब्दासाधुत्वज्ञापक)व्याकरणस्मृतिवच्च पूर्वोक्ताः स्मृतयोऽपि लोकसिद्धार्थानुवादिका एव न शास्त्रमूलाः। अस्तु वा विशुद्धमातापितृजन्यत्वज्ञानस्य व्यञ्जकत्वं शास्त्रगम्यं, तथापि ब्राह्मण्यादेर्न प्रत्यक्षत्वहानिः।

वस्तुतस्तु, व्यञ्जकत्वेऽपि नोढत्वप्रवेशः। तेन गवि गोर्गौरेव भवतीतिवदनूढायामपि सजातीयायामुत्पन्नः सजातीय एव भवति। विवाहाभावेन व्यभिचारजन्यत्वात्कुण्डत्वं गोलकत्वं परमधिकम्, नैतावता ब्राह्मण्यहानिः। अनिन्द्येषु विवाहेष्विति तु सन्तानवर्द्धनपुत्रविषयम्। ब्राह्मणविषया 'विन्नास्वेष विधि'रिति तु अनुलोमपरा। अत एव श्राद्धे ब्राह्मणकेतने कुण्डगोलकयोर्निषेधः- सार्थकः। अन्यथा 'निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवाञ्छुचिः' इति ब्राह्मणानामेव श्राद्धे निमन्त्रणविधानात् कुण्डगोलकयोः प्राप्त्यभावान्निषेधो व्यर्थः स्यात्। भ्रमप्राप्तनिषेधेऽप्यानर्थक्यं तदवस्थमेव।

अत्र केचित्, विशुद्धमातापितृजन्यत्वज्ञानस्यैव ब्राह्मण्यविशिष्टब्राह्मणज्ञाने कारणत्वेन ब्राह्मणत्वविशेषधियो दण्डत्वबोध इव कारणत्वा भावान्न ब्राह्मणत्वांशे निर्विकल्पकमित्याहुः। इतरविशिष्टधीष्विवेहापि विशेषणधिय हेतुत्वौचित्याद्विशुद्ध मातापितृजन्यत्वज्ञानेनापि ब्राह्मणत्वनिर्विकल्पकमेव जायते न साक्षाद्विशिष्टधीः। अन्यथा दण्डयादिविशिष्टबोधेऽपि दण्डादिधीर्हेतुर्न स्यात्, स्याच्च तद्धेतुरेव विशिष्टधियो हेतुरिति तु परे। विश्वामित्रादौ तु तपसा ब्राह्मण्यप्रयुक्त-सर्व कार्यसिद्धिर्न ब्राह्मण्यस्यैवेति केचित्। ब्राह्मण्यस्यैवेति तु परे। उभयथापि

तत्सन्ततौ ब्राह्मण्यमस्त्येव तपोविशुद्धमातापितृजन्यत्वम् । मूर्धावसिक्तादि-पारम्पर्येषु कारणतावच्छेदकवैजात्याद्विजातीयान्येव ब्राह्मण्यानीति केचित् ।

वस्तुतस्तु, एकशक्तिमत्त्वस्यैकस्येव कारणतावच्छेदकस्य संभवादेकमेव ब्राह्मण्यं युक्तमिति दिक् ।

## उदयनाचार्योक्तजातिबाधकानि

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥

नित्यमेकमनेकवृत्ति सामान्यमित्येवं लक्षिताया जातेर्व्यक्तेरभेदो बाधकः । घटत्वकलशत्वयोरेकेनैव परिच्छेदसिद्धावितरानर्थक्याात्तुल्यत्वमपि तथा । परस्परा-त्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र वृत्तिः सङ्करः । यथा भूतत्वं विहाय मूर्तत्वं मनसि, तच्च हित्वा भूतत्वमाकाशे । उभयमपि पृथिव्यादिचतुर्षु । सोऽपि तथा, एतस्य दूषकताबीजं तु न किंचित् । ननु समानाधिकरणजात्योः परापरत्वमेवावश्यकं; अन्यथा विरुद्धयोरपि जात्योः एकत्र समवायापत्तिरिति चेन्न; यथादर्शनव्यवस्थो-पपत्तेः । अन्यथा भवन्मते पृथिवीत्वेन सांकर्यापत्तेर्घटत्वजातेरप्युच्छेदापत्तिः । नानैव घटत्वानीति चेन्न; भूतत्वमूर्तत्वयोरपि तथापत्त्या जातिसांकर्योच्छेदापत्तेः । घटत्वाद्यनुगतप्रतीतिश्च दुर्घटा स्यात् ।

यत्तु, संस्थानविशेषैकार्थसमवायिद्रव्यत्वमेव घटत्वम् । न च संस्थानेऽपि विशेषो जातिरूप एव वाच्यः, स चान्यतरकर्मजन्यतावच्छेदकजात्या संकीर्णः इयं हि जातिः मल्लयोर्मेषाद्युभयकर्मजन्यतावच्छेदिकां जातिं हित्वा तरुकाकसंयोगेऽस्ति । एतां च हित्वा सा मल्लादिसंयोगे । उभय्यपि घटत्वारब्धे संयोगविशेषे इति वाच्यम् । तेषां भिन्नत्वात् विनिगमकं तु सार्वजनीना प्रतीतिरेवेत्याहुः ।

तन्न; पटत्वादीनामपि तथात्वापत्तेः । इष्टापत्तौ 'जात्याकृतिव्यक्तयः पदार्थाः' इति सूत्रविरोधः । पटजनकतावच्छेदिकायास्तन्तुसंयोगे उक्तरीत्या जातेरवश्याङ्गी-कार्यत्वात् । संयोगमात्रेण तदनुत्पत्तेः । यदपि लाघवात् सामान्यत एव मिथो व्यभिचारिजात्योः सामानाधिकरण्याभावो गोत्वाश्वत्वयोर्विरोधनिश्चयकाल एव गृह्यत

इति। तदपि न। मिथस्त्वस्यैकस्याभावात्। एवं तज्जातिसमानाधिकरणाभावप्रतियोगिन्यास्तदाभावसामानाधिकरणाया एव जातेस्तत्सामानाधिकरण्याभावः प्रतीयत इत्यपास्तं; तत्त्वस्यैकस्याभावात्।

यदि तु, घटवृत्त्यभावप्रतियोगिन्या घटत्वाभावसमानाधिकरणाया पटत्वजातेः घटत्वसामानाधिकरण्याभावो लाघवात्तादृशजातित्वावच्छेदेनैवावधार्यते, न तु घटत्वादिनानावच्छेदेन, अनन्तानां व्याप्यतावच्छेदकतापत्तेरित्युच्यते तदा धूमत्वालोकत्वे हित्वा वह्नित्वसामानाधिकरण्याभाववद्वृत्तित्वमेव तथा स्यात्। किं चैवमुपाधिसंकरोऽपि दूषणं स्यात्। तस्माज्जातिसंकरस्य दूषकताबीजं चिन्त्यम्।

तार्किकैर्नित्यद्रव्याणां परस्परव्यावृत्त्यर्थं स्वतश्च धर्मिग्राहकमानेन व्यावृत्ता विशेषा इष्यन्ते। तेषु जातिकल्पने तेषां स्वतोव्यावृत्तस्य रूपस्य 'सामान्यवानगुणो गुण' इति गुणलक्षणाक्रान्तत्वेन गुणत्वापत्त्या पदार्थान्तरत्वस्य च हानिः।

अभावे भावरूपाया जातेरसम्बन्धः। एवमांशिकतापि। यथा पर्वतो वह्निमानित्यत्र समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वेन पर्वतांशे प्रत्यक्षं, वह्न्यंशेऽनुमितिरित्यङ्गीकारे प्रत्यक्षानुमितित्वयोरांशिकतापत्तिः।

वस्तुतस्तु, शुक्ताविदं रजतमित्यस्य भ्रमप्रमात्ववदेकस्मिन्विधाद्वयाङ्गीकारेपि न क्षतिः प्रत्यक्षानुमितित्वे जाती भ्रमप्रमात्वे तूपाधी इति त्वप्रयोजकम्। प्रत्यभिज्ञायां जातावपि तथादर्शनात्। यदि त्वत्रांशिकत्वभिया ग्रहणस्मरणांशावपलप्यविलक्षणमेवेदं ज्ञानमित्युच्यते। ततः प्रत्यक्षानुमितित्वे अपि उपाधी सखण्डावखण्डौ वा भवेताम्।

यत्तु, पर्वतो वह्निमान्धूमवत्त्वादित्यत्र सत्यपि पर्वतगोचरे प्रत्यक्षे न तद्विषयकोऽनुव्यवसायः, किन्तु भिन्ने विषयेऽनुमितिसामग्र्या बलवत्त्वात्सैव भवति। पर्वते वह्निमनुमिनोमीत्यनुव्यवसायादिति।

तन्न; अनुमितिसामग्र्या बलवत्त्वे मानाभावात्। न च क्वचित्प्रत्यक्षस्यानुव्यवसायो नानुमितेः, क्वचिद्विपर्ययः। तत्राननुगतानि तव प्रतिबन्धकानि कल्प्यानि। यद्यपि सर्वज्ञानानुव्यवसायानां कादाचित्कत्वात्तथा (क्रमस्त्वन्यत्र) (युक्तं न सर्वत्र)। तथापि प्रकृतेऽनुगताया अनुमितिसामग्र्या एव प्रतिबन्धकत्वसंभवेन तथा

कल्प्यमिति वाच्यम् । पर्वतं साक्षात्करोमीति प्रत्यक्षानुव्यवसाये कादाचित्के सति सर्वदाऽनुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनायोगात् । द्वयसामग्रीसत्त्वे प्रत्यक्षानुमित्योर्व्यवस्थायां तु यथा त्वाच-घ्राणयोर्युगपद्विषयसंयोगे तत्कार्ययो-र्यथावल्लिङ्गवाच्ययोरिष्टसाधनत्वकृतिसाध्यत्वयोः परस्परं विशेषणविशेष्यभावव्य-वस्थायां विलक्षणमदृष्टं आत्ममनःसंयोगो वा तादृङ्नियामकस्तथेहापि ज्ञानमात्रे तस्यैव कारणता स्यान्न प्रत्यक्षादीनामिति चेन्न; यथा घटार्थिनो दण्डादिप्रवृत्ति-दर्शनान्न चरमकपालसंयोगमात्रस्य कारणता, तथा घटवह्न्यादिजिज्ञासोर्नेत्रोन्मीलन निमीलनधूमजिज्ञासादर्शनात् प्रत्यक्षादीनामपि कारणता । चाक्षुषत्वादिसामग्रीप्राबल्य-दौर्बल्ये तु नियतकार्यानुभवशपथ एव नियामको नान्यत्किञ्चित् । उच्छृङ्खलास्तु ज्ञानमात्र आत्ममनोयोगस्य कारणतायामेव मानाभावः घटादिदृष्टान्तस्य कार्यमात्रे-ऽसमवायिकारणत्वकल्पनायामप्रयोजकत्वादित्याहुः ।

केचित्तु, विलक्षणात्ममनःसंयोगेनैव कार्यसिद्धाविन्द्रियमनःसंयोगे माना भावः । न च सुषुप्त्यव्यवहितपूर्वक्षण उत्पन्नस्य ज्ञानस्य सुषुप्तिदशायामनुव्यवसा-यापत्तिः । तादृशात्ममनःसंयोगस्यैवाभावात्सुषुप्तेर्वा प्रतिबन्धकत्वादित्याहुः ।

एवं कार्यमात्रेऽदृष्टस्यापि कारणतायां मानाभावः । अदृष्टं हि प्रातिस्विकफल-जनकविहितनिषिद्धक्रियाजन्योऽतिशयः न च घटादेस्तद्दर्शनजन्यसुखदुःखादेश्च जनिका काचित्क्रिया विहिता निषिद्धा वाऽस्ति । यद्यपि वेदे स्मृतिपुराणादौ वा धर्मात्सुखमधर्माद्दुःखमित्यादि वचः स्यात्तथापि तदग्निहोत्र ब्रह्मवधादिविधि-निषेधानामर्थानामेवार्थमनुवदेत् । तत्तद्विधिनिषेधाभ्यामेव धर्माधर्मावगमात् । कण्डूयनादिजन्ये तु सुखदुःखेऽदृष्टसामग्रीत एव भवत इति दिक् ।

इति श्रीमीमांसकशंकरभट्टात्मजनीलकण्ठकृतौ भाट्टार्के सामान्यनिरूपणम् ।

---

# शक्त्यधिकारः

शक्तिरपि पदार्थान्तरम् । तृणफूत्कारयोर्मणिरविकिरणयोररणिमन्थनयोश्च सम्बन्धेष्वेव शक्तिकल्पनस्य तज्जन्याग्निषु व्यभिचारवारकजातित्रयकल्पनाल्लघुत्वात् । यदि तु व्यापारिकारणत्वानुपपत्त्या व्यापारकल्पनात्तेन तस्यान्यथासिद्धेरभावात् अग्न्यर्थिनस्तृणादिषु प्रवृत्त्यनुपपत्त्या चापूर्वव्यवहितस्यापि यागादेरिव तृणादेरपि कारणतेष्यते तदा तत्राप्यपरा । तथापि जातित्रयाच्छक्तिद्वये लाघवमेव दण्डादावपि शक्तेरेव कारणता, सापि घटानुकूलाऽन्यान्याश्च ताडनाद्यनुकूलाः । तदवच्छेदकञ्च दण्डत्वाद्येव । तृणारण्यादिगताया अपि भिन्नान्येव तृणत्वादीन्यवच्छेदकानीति केचित् । शक्त्यन्तरं तथा कल्प्यत इत्यन्ये । शक्तित्वं तथेतिपरे । अत्र यद्यपि कार्यभूत-जातित्रयकल्पनातो न लाघवं, तथापि 'दध्ना जुहोति; पयसा जुहोती'त्यादिषु दर्शादि-जातिकल्पनात् शक्तितदवच्छेदककल्पनेति लाघवम् ।

अनन्यथासिद्धनियतपूर्ववर्तित्वेष्वप्यनेकपदार्थेषु कारणताकल्पनमपेक्ष्य शक्ति-रूपकारणतायां तु अतीव । आकाशपदशक्तेरिव तस्या निरवच्छिन्नत्वेऽपि न काचित्क्षतिः । लाघवञ्च महत् । अनन्यथासिद्धत्वादीनां शक्तिव्यञ्जकत्वस्यावश्य-कत्वात्तत्रैव कारणताऽस्त्विति चेन्न; तेषां प्रतिव्यक्तिभिन्नत्वेनानन्तकार्यकारण-भावापत्तेः ।

वस्तुतस्तु, नानन्यथासिद्धत्वादौ शक्त्यभिव्यञ्जकता । किन्तु धूमज्ञानशक्ते-र्वह्निज्ञानकारणत्ववत् समूहालम्बनरूपतद्भाननिष्ठशक्तेरेव अनन्यथासिद्धत्वादिज्ञानं तु प्रत्यक्षादिनैव ।

अतिनव्यास्तु, सर्वकारणेष्वेककार्यनिरूपिता एकैव शक्तिः । तदवच्छेदकानि तु प्रतिकारणं भिन्नान्येव दण्डत्वादीनि । न चैवं दण्डमात्रसत्त्वे चक्राद्यभावेऽपि घटोत्पत्त्यापत्तिः । तस्या एव दण्डत्वचक्रत्वाद्यवच्छिन्नायाः सत्त्वादिति वाच्यम् । अवच्छेदकावच्छिन्नकारणसमवधानस्यापेक्षणीयत्वादित्याहुः ।

यत्तु, भ्रम्यजनकसूक्ष्मदण्डव्यावृत्तमङ्गुल्यादिसाधारणदण्डत्वं घटकारणतावच्छेदकतया कल्प्यते। छिद्रघटाद्व्यावृत्तमञ्जलिपर्णपुटकसाधारणं जलाहरणकार्यतावच्छेदकतया घटत्वमित्यपि शक्त्यैवापास्तम्। किञ्च 'व्रीहीन्प्रोक्षती'ति व्रीहीणां क्रियाजन्यफलशालित्वरूपं कर्मत्वमवगतम्। तत्रोत्पत्त्याऽऽप्तिविकाराणामसंभवेन परिशेषात्संस्कार्यत्वमवसीयते। स एव च संस्कारो द्रव्यगुणादिभ्यः परिशिष्टः शक्तिरित्युच्यते। तस्या आत्मगुणत्वे 'व्रीहीनि'ति द्वितीयायाः श्रुतिविरोधापत्तिः। तथाहि। प्रोक्षणभाव्यत्वेन व्रीहय एव गम्यन्ते न त्वात्मापूर्वं च। तद्गमकशब्दाभावात्। तेषाञ्च भाव्यता न स्वरूपेण सम्भवतीति अपूर्वसाधनतया सा वाच्या। साधनता च यदि स्वरूपमेव, तदा स एव दोषोऽतः प्रमाणबलादतिरिक्तैव सिध्यति। न तु प्रोक्षणमदृष्टसाधनमित्येवं शब्दोऽपूर्वं बोधयति। न च व्रीहिकर्मकं प्रोक्षणमिष्टसाधनमित्यवगम्यते। किमिष्टमित्यपेक्षितेऽपूर्वमिति कल्प्यते। स्वरूपेण तस्येष्टत्वाभावात्। न च तस्य फलसाधनता कुतोऽप्यपगता, येन तद्रूपेण तस्येष्टत्वा(भावः)भावात् न च तस्य फलसाधनता कल्प्यते। जलसंयोगाश्रयत्वेनैव व्रीहीणां प्रोक्षणभाव्यत्वमिति चेन्न; सर्वव्रीहीणां तदभावेन शास्त्रार्थानिष्पत्तेः। तस्य चोत्तरकाले नाशादवघातकाले संयोगवत्त्वेनाभावाददृष्टत्वेनैव सा वाच्या। तच्चादृष्टं क्रियासमानाधिकरणमेव कल्प्यं नात्मगुणः। न च व्रीह्यादिगतो गुण एवास्तु न तु शक्तिरूपं पदार्थान्तरं; यत्किंचिद्व्रीह्यादिनाशे तन्नाशापत्तेः। द्रव्यासक्तगुणनाशमेव प्रति तादृशकारणतायाः क्लृप्तत्वात्। प्रतिव्यक्तिपर्याप्तानेकगुणकल्पने तु महद्गौरवम्। किं च तस्य गुणत्वे(न) व्यवहारः प्रमाणं, अप्रत्यक्षत्वात्। शक्तित्वे त्वभियुक्तव्यवहार एव मानम्।

यथा—कुसुमे बीजपूरादेर्यत्नाल्लाक्षाऽवसिच्यते।
शक्तिराधीयते तेन काचित्तां किं न पश्यसि॥
किं वा सिञ्चसि बीजपूरकुसुमे लाक्षारसं तत्क्षणादेवासौ गलितो मिलिष्यति कथं पुष्पे सुदूरान्तरे।
किं चान्यत्कियतोऽपि चास्य किमसौ संभाव्यते विस्तरः
प्रत्यब्दं भवति द्रुमोऽयमरुणं छत्रं वसन्तश्रियः॥

तथा—मृदमपि विषं कश्चिन्मन्त्रः करोति नियोजितः।
सृजति तदसौ काचिच्छक्तिं मृदोऽपि विमोहिनीम्॥

इति।

लाक्षारससेकात्तु वृक्ष एव रक्तपरमाण्वाक्षेपेण कालान्तरे रक्तपुष्पजनिका शक्तिः कल्प्या । तेन लाक्षारससेकात्सिक्तपरमाणुषु रक्तता । तेषामल्पानामपि सम्बन्धादसिक्तेष्वन्येष्वपि पाकतो रागः कल्प्योऽसिक्तपरमाणूनां रक्तारम्भकत्वा-योगादित्यपास्तम् । पाकस्य लाक्षासेकसहकारित्वे मानाभावाच्च ।

केचित्तु, विशेषगुणानामजन्यत्वेनैव पाकत्वाभावः । अतः पाकमात्रे व्यभिचा-रान्मतान्तरे पाकविशेषादिवान्वयव्यतिरेकाभ्यां सेककल्प्याच्छक्तिविशेषादेव रागः, आपुष्पोद्गमं चासौ अवतिष्ठत इत्याहुः ।

परे तु, सेकोत्तरमेव पुष्पमुत्पद्यते । पुष्पस्यैव च कालविशेषनियता प्रत्यक्षजनिका शक्तिः । अतो न सेकोत्तरमेवोपलम्भः । अतः सामयिकात्यन्ताभावात् कादाचित्कोप-लम्भ इत्यूचुः । सार्वजनीना चाभिमन्त्रितभस्मजलादिषु शक्तिः । अभिमन्त्रणध्वंसो हेतुरिति त्वपूर्वमप्युत्सादयेत् ।

यत्त्वभिमन्त्रणतुष्टा संनिहिता मन्त्राभिमानिनी देवतैव तत्कार्यकर्त्री । तन्न; अलौकिकदेवता तत्तोषसंनिधानाद्यपेक्ष्य शक्तिकल्पनाया लघुत्वात् किञ्चानेकदेश-व्राताभिमन्त्रणसंनिधानार्थं कायव्यूहकल्पना च । गुरुतरा तव स्यात् स्वमन्त्रजप-प्रतिसंधानमेव संनिधानं न शरीरमिति चेन्न; व्यवहितविषयकप्रतिसंधाना-संभवात् । तादृशदेवताशक्तिकल्पनात्तु भस्मन एव तत्कल्पनं लघु ।

ननु सत्यप्यग्निसंयोगे प्रतिबन्धकसमवधाने न दाहो जायते, पुनश्चोत्तेजक-समवधाने जायते । तत्र शक्तेः कुण्ठनोद्बोधौ नाशोत्पत्ती वा भवेताम् नाद्यः, अनवस्थापत्तेः । नान्त्यः, अनेकनाशोत्पत्तिकल्पने गौरवात् इति चेन्न; उक्तयुक्त्या क्लृप्तायां शक्तावेतद्गौरवस्य फलमुखत्वात् । शक्त्यभावे च व्रीहियवदधिमय आदिः स्थलेऽनेकादृष्टविजातीयानेकयागहोमादिकल्पनं, समुच्चयस्तेन "चतुर्दश पौर्ण-मास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामित्यादिलिङ्गदर्शनबाधः । व्रीहिषु श्रुतानां धर्माणां यवेष्वकरणमित्यादि सर्वमसमञ्जसम् । शक्तिसत्त्वे तु समञ्जसमिति प्रयोजनम् सा च शक्तिर्द्वेधा, सहजा आधेया च । आद्या संस्कारत्वादिका शाब्दी च । अन्त्या प्रोक्षणादिजन्या व्रीह्यादिगता । अनयैव प्रतिष्ठाजन्यप्रतिमासंस्कारस्वत्वा-शौचापूर्वाण्यपि व्याकृतानि । एवं यज्ञपात्राणामुष्णेन वारिणा, ताम्रादीनां चाम्लादिना

शुद्धिरपि ज्ञेया। तथा च भट्टपादाः—"पापक्षयो हि शुद्धत्वं धर्मयोग्यत्वमेव वेति।"

विप्रादिवधनिमित्तप्रायश्चित्तकरणः पापनाश एव शुद्धत्वम्। 'शुध्येद्विप्रो दशाहेने' त्यादौ तु सपिण्डोत्पत्ति-मृतिजन्याख्यशक्तिनाशेन कर्मयोग्यत्वमेव। यज्ञपात्र-ताम्रादीनां शूद्रोच्छिष्टादिस्पर्शजन्याशुचित्वाख्यशक्तिनाश एव तत्। सहजमाधेयं च बलमपि शक्तिरेव।

इति श्रीमीमांसकसंकरभट्टात्मजभट्टनीलकण्ठकृतौ भाट्टार्के शक्तिनिरूपणम्।

---

## संख्याधिकारः

अथ सङ्ख्या । सा च गणितप्रत्ययासाधरणकारणम् । एकत्वादिप्रत्यये घटादिस्वरूपस्यैव कारणत्वमिति चेत्, न; तद्धि घटव्यक्तेस्तज्जातेर्वा ? आद्ये घटान्तरे, अन्त्ये पटादौ तद्प्रत्ययापत्तेः । एको घटः, एकः पट इति प्रतीतेर्जातिरेवैकत्वमिति चेन्न; सा हि सत्ता अन्या वा ? नाद्यः, द्वौ स्तस्त्रयः सन्तीति द्विबहुष्वप्यापत्तेः । सत्ताजात्यनङ्गीकाराच्च । नान्त्यः, एका जातिरेकोऽभाव इति सामान्याभावादिष्वप्येकत्वप्रतीतिसद्भावात् । न च जातिस्तत्र संभवति, तेन संख्यैवैकत्वम् । द्वित्वं तु एकत्वसहितमेकत्वम् । द्वित्वसहितमेकत्वं त्रित्वम् । त्रित्वसहितमेकत्वं चतुष्टयम् । अयमेकोऽयमेक इत्यपेक्षाबुद्धिविषयत्वं साहित्यम् । एतदुक्तवैलक्षण्याभिप्रायेणैवोचुर्भट्टपादाः—

> यद्यप्यर्थात्मनाऽस्त्येव महासंख्यास्ववान्तरा ।
> अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम् ॥

इति ।

केचित्तु, सङ्ख्या गुणः, गुणकर्मादिसंख्याव्यवहारस्तु आश्रयगतसंख्योपाधिकः । अन्यथेह पटेऽङ्गुलमात्रं शुक्लमङ्गुलं च पीतमिति प्रतीतेः परिमाणमपि गुणो न स्यात् । गुणत्वजातेस्तु महर्षिव्यवहारादेव सिद्धिरित्याहुः ।

वस्तुतस्तु, संख्या पदार्थान्तरमेव, गुणकर्मादिषु प्रतीतेः । आश्रयगतसंख्योपाधिकेयमिति चेन्न; घटादावप्रतीतौ वैलक्षण्यापत्तेश्च । एवं चैकं शुक्लत्वमित्यपि संगच्छते ।

यत्तु, एकमङ्गुलमितं शुक्लं तावच्च पीतमिति प्रतीतेः परिमाणस्यापि पदार्थत्वमापादितम्, तन्न; अङ्गुलमितः पटः शुक्लस्तावांश्च पीत इत्यङ्गुलमिते पटे शौक्ल्यं तावति च पीतमिति च प्रतीतेः । पूर्वोक्ताया आश्रयगतपरिमाणोपाधिकत्वस्यैवौचित्यात् ।

यत्तु संख्यायाः पदार्थान्तरत्वे गौरवमिति, तन्न; तस्यानुभवानुसारितया प्रामाणिकत्वात्।

वस्तुतस्तु, संख्यायां संख्यात्व - गुणत्व - समवायकल्पनातः संख्यात्वमात्र-समवाये विपरीतं लाघवम्। प्रमाणसद्भावे हि व्याप्यव्यापकानेकजातिसमवाय-कल्पनं, न तु तदभावे। महर्षिव्यवहारो मानमिति चेन्न; गुरुत्वे तदभावेन गुणत्व-जात्यसाधकत्वात्। अन्येषामृषीणामयं, जैमिनिमहर्षेस्तु विपरीतः। पृथक्त्व-निवेशात्संख्यया कर्मभेदः स्यादिति। अत एव तदधिकरणे 'तिस्र आहुतीर्जुहोति, द्वादश द्वादशानि जुहोतीत्यत्र साक्षात्कर्मगतया संख्यया तद्भेदस्य स्पष्टतरत्वेन पूर्वपक्षानुत्थानात् प्राप्तं दश प्राजापत्यान्पशूनालभते इति द्रव्यगतसंख्यायुक्तोदाहरणं भाष्यकारादीनां संगच्छते, न तु संख्याया गुणत्वेन द्रव्यमात्रगतत्वे। क्वचित्संख्याया-गुणत्वव्यवहारस्तु सोमादिष्वाङ्गत्वाभिप्रायेणेति दिक्।

इति श्रीमीमांसकशङ्करभट्टात्मजनीलकण्ठकृतौ भाट्टार्कें संख्यानिरूपणम्।

---

# विषयताधिकारः

ज्ञानेच्छाकृतिद्वेषाः सविषयाः। प्रतीतेः स्मृतिहेतुः संस्कारोऽप्येवमिति केचित्। नेति परे, इति मतद्वयमपि प्राङ्निरटङ्कि। विषयता तु लाघवात् विषयस्वरूपैवेति जरत्तार्किकाः।

एवं तु अतीतानागतघटादिविषयाणामसत्त्वात्तद्ज्ञानाद्यभावपरेति अतिरिक्तैव सा नित्या चेति केचित्। एवमपि घटज्ञानवतः 'पटं जानामी'त्यनुव्यवसायापत्तेः प्रतिज्ञानादिभिन्ना एव ताः, घटादेस्तद्गतगुणादेर्वा सामग्र्या जन्या इति परे। एवं यद्यपि स्मृतिहेतुसंस्कारवत् फलबलकल्प्यायास्तस्याः सत्त्वादतीतघटादेर्ज्ञानमुपपद्यते; तथापि अनागतघटादेस्तस्यासंभवस्तदवस्थ एव। अतो नित्या एव ता इति नव्याः। न चैवं संयोगस्यापि नित्यतापत्तिः, दण्डनाशेऽपि दण्डीति प्रतीत्यापत्तेः। मिश्रादीनां ज्ञानाजन्यतोक्तिस्त्वभिव्यक्तिपरा। सा च विषयता त्रेधा, प्रकारता, विशेष्यता, सांसर्गिकी चेति। आद्या चतुर्विधा। (१) विशेष्ये विशेषणं, तत्र विशेषणान्तरमित्येका। यथा 'स्वर्गकाम' इति बहुव्रीह्यर्थे पुरुषे कामो विशेषणं तत्र च स्वर्गः। एवं लोहितोष्णीषा लोहितवसना ऋत्विज इति, चित्रगुरिति च। (२) विशिष्टस्य वैशिष्ट्यमित्यन्या। यथा रक्तदण्डवांश्चैव(ष)इति रक्तत्वविशिष्टदण्डस्य पुरुषे भानम्। (३) एकविशिष्टेऽपरवैशिष्ट्यमिति परा, यथा दण्डी चण्डः कुण्डलीति। (४) एकत्र द्वयमिति अन्त्या, चैत्रो दण्डी कुण्डली चेति।

इति श्रीमीमांसकशङ्करभट्टात्मजनीलकण्ठकृतौ भाट्टार्के विषयतानिरूपणम्।

---

# वैशिष्ट्याधिकारः

विशिष्टमपि संयोगसमवायादिसम्बन्धरूपमेव नातिरिक्तमिति प्राञ्चः ।

केचित्तु, जलादौ पृथिवीत्वान्यत्वविशिष्टद्रव्यत्वस्य प्रतीतेस्तस्य च द्रव्यत्वानतिरेके पृथिव्यामपि तत्प्रतीत्यापत्तेरतिरिक्तमेव विशिष्टमित्याहुः ।

परे तु, आधेयतावच्छेदकभेदेनाधिकरणतानामतिरेकमङ्गीकृत्य निरूपिताधिकरणतैव पृथिव्यां नास्ति । विशिष्टस्य अतिरेकपक्षे दण्डित्वनिश्चयेऽपि कदाचिद्दण्ड संशयापत्तिरित्याहुः ।

अभावाधिकरणयोस्तु स्वरूपमेव सम्बन्ध इति प्राञ्चः ।

नव्यास्तु, स्वरूपाणामननुगमात् गुणादिष्वपि तथापत्त्या मतान्तरे समवायस्याप्यसिध्यापत्तेः, वैशिष्ट्यं सम्बन्धान्तरमेव । तच्चेन्नित्यं तदा घटसत्त्वेऽपि तदभावधीः स्यात् । पूर्वं तदभावस्थित्या वैशिष्ट्यस्य सत्त्वात् । अतो भिन्नान्येव तानि, नव्याङ्गीकृतनानासमवायवत् । तदेकत्वे हि 'वायू रूपवान्' इति प्रतीत्यापत्तिः सन्नपि वायौ रूपसमवायो न तत्र सम्बन्ध इति व्याहतम् । समवायस्य धर्मिग्राहकमानेन सम्बन्धत्वेनैव सिद्धेः । किञ्च घटाभावस्य पूर्वं सत्त्वेन भूतलघटाभावात्मकस्वरूपसत्त्वात् घट आनीतेऽपि तदभावधीः स्यात् । तत्कालावच्छिन्नभूतलाभावयोः स्वरूपसम्बन्धत्वमिति चेन्न; नागृहीतविशेषणन्यायेन तत्तत्कालानामेव तत्त्वं स्यान्न तु भूतलस्य । इष्टापत्तौ तत्कालात्मकक्रियाणां विनिगमनाविरहः इत्याहुः ॥

इति श्रीमीमांसकशङ्करभट्टात्मजनीलकण्ठकृतौ भाट्टार्के वैशिष्ट्यनिरूपणम् ।

---

# प्रतियोगिताधिकारः

प्रतियोगिताऽपि पदार्थान्तरम् । स्वरूपसम्बन्धेन तत्कार्यस्यानिर्वाहात् । घटो नास्तीत्यत्राभावेन सह घटस्य सम्बन्धत्वायोगात्; संयोगसमवायादिष्वेव लोके सम्बन्धत्वप्रतीतेः । सम्बन्धस्य घटात्मकत्वे घटः प्रतियोगी न स्यात् । घटो घटाश्रय इति प्रतीत्यभावात्प्रतियोगीत्यबाधितप्रतीतेः । प्रतियोगितात्मना तदाश्रय इति चेन्न; तस्या घटत्वाद्यतिरिक्ताया अभावात् । घटत्वाद्येव सेति चेन्न; तस्या अनुयोगिना निरूप्यमाणत्वेन घटत्वादेस्तथात्वायोगात् । न च विषयवैलक्षण्यादृते ज्ञानस्य विलक्षणव्यवहारहेतुता संभवति । ज्ञानवैलक्षण्येनैव नानाव्यवहारजनकोपपत्तेरेकमेव वस्तु जगति स्यात् । अयं तु, प्रतियोगितादिरेको, धर्म्यन्तरमभावमङ्गीकुर्वतो मतेन । घटत्वादिवद्धर्ममात्राङ्गीकारेण घटाभेदमङ्गीकुर्वतामाचार्यादीनां मते तु स एव प्रतीयते न प्रतियोगितापीति क्वातिरेकानतिरेकचिन्ता ।

इति श्रीमीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृतौ भाट्टार्के प्रतियोगितानिरूपणम् ।

---

## साधर्म्यवैधर्म्याधिकारः

अथ साधर्म्यवैधर्म्ये । वाच्यत्वं सर्वेषां ज्ञानयोग्यत्वं संख्यावत्वञ्च । स्वस्मिन्नपि साऽस्त्येव । एकं शतं, द्वे शते इति । कोशश्च ।

'संख्याः संख्येयेष्वेकादश त्रिषु । विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः । संख्यार्थे द्विबहुत्वे स्तः ।' इति ।

आदश-अष्टादश-नवदशपर्यन्तं त्रिषु लिङ्गेषु । अष्टादश नरः, अष्टादश स्त्रियः,तथा कुलानि । विंशत्याद्या एकोनविंशतिप्रभृति शुक्लादिवल्लक्षणया संख्येये, तद्विशेषण-त्वेन संख्यायाञ्चैकवचनान्ताः । उभयथाऽप्येकोनविंशतिर्घटाः इति संख्यार्थे (संख्येयार्थे) । संख्याया एव विशेष्यत्वेनोक्तौ तु गवामेकोनविंशतिः, विंशती विंशतयः इति वचनत्रयमपीत्यर्थः । अत एव षड्विंशतिषड्विंशतयोऽनयोः पङ्क्तय इत्यूहालेखः ।

भावानां वस्तुत्वभावत्वाख्यजातिमत्त्वम् । शक्तिभिन्नानां तद्वत्त्वम् । द्रव्यगुण-कर्मणां सत्ताजातिमत्वमिति तार्किकाः । तत्तु सत्ताजातिनिरासान्निरस्तम् । गुणक्रिययोर्द्रव्यमात्रनिष्ठत्वम् । द्रव्याणां सर्वेषां साधारणासाधारणगुणवत्त्वम । साधारणः संयोगः । सोऽपि दिग्वर्णयोरात्ममनसोश्चाजः, अन्येषां जन्यः । कालाका-शयोस्त्वजोऽपि न, मानाभावात् । असाधारणास्तु ते । मनोभिन्नानामैन्द्रियकत्वं तादृशगुणवत्त्वञ्च । तेषामेवामात्मभिन्नानां(?)बाह्येन्द्रियग्राह्यत्वं, तादृशगुणवत्त्वञ्च । वायुवर्णभिन्नानां तेषामेव चाक्षुषत्वं, सान्धकाराणां वाय्वन्तानां मूर्तत्वं क्रियावत्त्वं च । अन्येषां षण्णामपरिमितत्वम् । आद्यानां चतुर्णां स्पार्शनवत्त्वम् । दिक्कालयोस्तु षडिन्द्रियवेद्यत्वम् । तेजोन्तानामाकाशान्धकारयोश्च रूपवत्त्वम् । पृथिवीजलयो रस - द्रवत्व - गुरुत्ववत्त्वमिति ॥

इति श्रीभट्टशङ्करात्मजभट्टनीलकण्ठकृतौ भाट्टार्के साधर्म्यवैधर्म्यनिरूपणम् ।

———

# अभावाधिकारः

अथाभावः। स तु घटत्वादिवत् घटादेरेव धर्मान्तरं, न तु भिन्नो धर्मी। यथोचुर्भट्टपादाः—

न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः।
धर्मयोर्भेद इष्टो हि धर्म्यभेदेऽपि नः स्थिते॥ इति।

सर्वं हि वस्तु सदसदात्मना द्विधमिति मिश्राः।

नव्यास्तु, भावादत्यन्तातिरिक्तमेव तमाहुः।

यत्तु प्राभाकराः, लाघवादधिकरणात्मकमेव तमाहुः तन्न; अनन्ताधिकरणरूपत्वमपेक्ष्यातिरिक्तत्व एव लाघवात्। अन्यथा भूतले घटो नास्तीति ज्ञानोत्तरमानीतेऽपि तत्र घटे तादृशधीप्रसङ्गात्। भूतलसत्वात्, आधाराधेयभावानुपपत्तेश्च। उपपन्नं चैवं गन्धरसस्पर्शानामिन्द्रियविशेषैरग्राह्यत्वेऽपि गन्धाद्यभावानां तत्तदिन्द्रियग्राह्यत्वम्। एवं ज्ञानविशेषः कालविशेषो वाऽभाव इति सौगतमतमप्यपास्तम्।

अभावत्वं तु, द्रव्यगुणादिभिन्नत्वमिति केचित्। अखण्डोपाधिरिति परे।

स चाभावो द्वेधा। संसर्गाभावोऽन्योन्याभावश्च। संयोग-समवायादिसंसर्गावच्छिन्नप्रतियोगिताक आद्यः। संयोगादिसम्बन्धेष्वेव संसर्गव्यवहारो न तादात्म्ये। भूतले घटो नास्तीत्यत्र नञोऽपसारे संयोगादिनैव भूतले घटसत्ताप्रतीतेः। अत्र च संसर्गमर्यादयैवोपस्थितः संसर्गः प्रतियोगिताया अवच्छेदको न प्रकारतया। तेन घटः पटसंसर्गो नेत्यन्योन्याभाववारणमिति केचित्। एतन्नियमे मानाभावादखण्डोपाधिरेव संसर्गाभावत्वमिति परे। तादात्म्यावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः। 'घटः पटो न' इत्यत्र नञि पृथक्कृते तादात्म्यस्यैव प्रतीतेः। नामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयायोगात्। घटः स्वसम्बन्धीत्यप्रतीतेस्तादात्म्यसंबन्धाभावात् न तेन प्रतियोगिताऽ-

वच्छिद्यते । अतोऽन्योन्याभावत्वमखण्डोपाधिरेव । एतन्मतेनाभावत्वमखण्डोपाधिः । किन्तु द्रव्यगुणादिभिन्नत्वमेव, आत्माश्रयाभावात् ।

संसर्गाभावोऽपि त्रिविधः । प्रागभावः प्रध्वंसाभावोऽत्यन्तभावश्च । तत्र सान्तोभाव आद्यः । जन्योऽपरः । नित्यः संसर्गाभावोऽन्त्य इति प्राञ्चः ।

घटानयनकाले तु तत्रात्यन्ताभावस्य संबन्धान्न प्रतीतिरिति केचित् ।

उत्पत्तिविनाशशाली चतुर्थोऽयमभाव इत्यन्ये ।

सामयिकोऽप्यत्यन्ताभावोऽथं नास्तीति प्रतीतेस्तदवगाहित्वादिति परे ।

घटो 'भावी' 'ध्वस्त' इत्यादौ संसर्गस्य प्रतियोगितावच्छेदकत्वाप्रतीतेः, प्रागभावध्वंसयोर्न संसर्गाभावत्वमिति नव्याः ।

समानधर्मावच्छिन्नप्रतियोगिताकानां ध्वंसप्रागभावात्यन्ताभावानां न सामानाधिकरत्वमिति प्राञ्चः । कास्मिंश्चिद्रक्ते रूपे नष्टे परस्मिंश्चोत्पत्स्यमानेऽन्तरा रक्तं रूपं नास्तीति प्रतीतेर्ध्वंसप्रागभावानवगाहितयाऽत्यन्ताभाव एव विषयः । तेनाविरुद्धं सामानाधिकरण्यमिति नव्याः ।

भाट्टैकदेशिनस्तु, ध्वंसप्रागभावौ नात्यन्ताभावादतिरिच्येते । किन्तु घटानधिकरणघटावधिकपरत्वाश्रयकालीनेऽत्यन्ताभाव एव ध्वंसव्यवहारः । घटानधिकरणपरत्वाश्रय एव तस्मिन्प्रागभाव इति । भविता, नष्ट इति प्रतीत्योस्त्वाद्यचरमक्षणावचलम्बौ । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावोऽस्ति, घटवत्यपि 'घटपटौ न स्त' इति प्रतीतेः । अन्योन्याभावोऽप्येवम् । स्तम्भौ घटपटौ नेति । अव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकौ तु तौ प्रागुदाहृतौ ।

इति श्रीमीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृतौ भाट्टार्के अभावनिरूपणम् ।

---

# मोक्षाधिकारः

स तु प्रबोधेन स्वाप्निकप्रपञ्चस्येव तत्त्वज्ञानेनाविद्यकप्रपञ्चस्य नाशे विज्ञानानन्दस्वरूपकेवलात्मना एवावस्थानम्। "यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति; यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि'ति श्रुतेरिति वेदान्तिनः।

तन्न; सार्वजनीनप्रत्यक्षसिद्धप्रपञ्चस्यापलापायोगात् "द्वैतमिव भवती'ति वचस्त्वाशुतरविनाशितयौपचारिकम्, स्वप्नेन्द्रजालमृगतृष्णास्विव विषये वैराग्यर्थम्, मोक्षे च रुचिजननार्थम्। 'आत्मैवेदं सर्वमि'ति तु मोक्ष आत्मनः प्रपञ्चसम्बन्धनिराकरणार्थं न तु प्रपञ्चस्यैव। अत एव 'यत्र त्वस्य सर्वमात्मैवाभूदि' ति श्रुत्यन्तरे मुक्तावस्था प्रतिपादकं 'यत्रे'ति पदं संगच्छते। अस्यात्मनो दर्शनसाधनत्वेन तद्विषयत्वेन वा नान्यत्किंचिदित्यर्थः। प्रपञ्चसम्बन्धाभावे तु 'केन किं पश्येदि'त्यपि वचः संगच्छते। 'आत्मैवेदं सर्वमि'ति च, स्वयंदासास्तपस्विन इतिवत्। यत्तु 'एक एवाद्वितीयं ब्रह्म, नेह नानास्ति किंचन' इति श्रुत्या प्रपञ्चस्याविद्याकल्पितत्वेन मिथ्यात्वं जीवपरमात्मनोश्चैक्यं बोध्यत इत्युक्तम्। तत्रैकमेवेत्यस्य सजातीय शून्यत्वमर्थः। एक एवाकाश इत्यत्रेव। न ह्यत्र घटाद्यभावोऽपि प्रतीयते। अत एव 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयं' इत्यत्रेव नेहेत्यादिर्वाक्यशेषोऽप्यमुमेवार्थमनुवदति। न तु घटादिसत्तामपि निषेधति।

अत एव 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतिरपि जीवभिन्नब्रह्मस्वरूपप्रतिपादनपरैव संगच्छते। मत्वर्थीयाच्प्रत्ययान्तं वाऽऽनन्दपदम्। अत एव नपुंसकलिङ्गत्वं संगच्छते। अतो जीवात्मपरत्वेऽपि न क्षतिरित्युक्तं प्रागात्मवादे। किं च प्रत्यक्षादिबाधितेऽप्यभेद एव 'द्वैतमिव भवती'त्यादि श्रुतीनां तात्पर्योक्तौ 'आदित्यो यूपो यजमानो यूपो यजमान एक कपालो; यदिदमश्रुशयित तद्रजतं हिरण्यमभवत्। प्रजापतिरात्मनो वपामुदखिदत्तामग्नौ प्रागृण्हात्तस्मादजस्तूपरः सममवत्तेनायजत'। 'ग्रावाणः प्लवन्त' इत्यादीनामपि स्वार्थे प्रामाण्यापत्तिः। इष्टापत्तौ

विरोधे गुणवादः स्यादनुवादोऽवधारिते
भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः॥

इति।

भवदुक्ता प्रत्यक्षादिविरोधे गौणी न सिध्येत् । अवधारिते प्राप्तार्थकत्वे 'वायुर्वै क्षेपिष्ठे'त्यादौ । तद्धानौ—वाधप्राप्त्योरभावे । 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति; देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्ती' त्यादौ । अत्र विस्तरोऽस्मत्कृतौ वादोद्योते ज्ञेयः ।

किं च ज्ञानेनाविद्यानाशेन प्रपञ्चविलयात्केवलज्ञानसुखरूपात्मावस्थानस्यैव मोक्षत्वोक्तौ चैत्रज्ञानेनाविद्यानाशे तस्या एकत्वात्सर्वमुक्त्यापत्तिः । यद्यपि ताः प्रतिजीवं भिन्नाः, तथाप्यात्मैक्याच्छुक वामदेवादीनाममु यु]क्त्यापत्तिः ।

अतात्त्विकभेदस्त्वप्रयोजकः । तात्त्विकभेदस्तु नैवेष्टो भवतः । सति तु तस्मिन्न जीवात्मनां ज्ञानसुखरूपता सिध्येत् । 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतेः 'अहं पचामी'त्यादिवदहं सुखी जानामि ज्ञास्याम्यज्ञासिषमिति जीवात्मसु भेदप्रत्ययोपलम्भेन परमात्मगोचरत्वात् । अमुक्ता एव त इति चेन्न; तन्मुक्तिबोधक वाक्याप्रामाण्यापत्तेः । न च सर्वमुक्तौ तन्मुक्तिः; तस्यां मानाभावात् । जीवानन्त्याच्च । अनन्ता अपि क्रमादेकैकमुक्त्या सर्वे मुच्यन्त इति चेन्न; सर्वमूर्तसंयोगित्व-महत्त्ववत्सर्वकालवर्तित्वस्य जीवद्देहानधिकरण क्षणानधिकरणत्वस्य वाऽऽनन्त्यात् । दीपसन्तानस्येव ज्ञानसन्तानस्य विलयो मोक्षः इति शून्यवादिनः ।

विचित्रवासनाहेतुक-विचित्रनीलपीताद्याकारक ज्ञानसन्तानस्य वासनोच्छेदान्नीलपीतादि वैचत्र्यरहित शुद्धसंविन्मात्रेणावस्थानमिति निरालम्बनवादिनः ।

मतद्वयमपीदं संविद्भिन्नप्रत्यक्षसिद्धः घटपटनीलपीतादिपदार्थानां संविन्मात्ररूपत्वोक्तेः प्रत्यक्षादिविरोधेनापास्तं वार्तिक एवेतीह दिक् ।

तस्मादात्यन्तिकी दुःखनिवृत्तिर्मोक्षः । दुःखप्रागभावासमानकालिकत्वमात्यन्तिकत्वम् । निवृत्तिश्च ध्वंसः । अत्र चरमदुःखेऽतिव्याप्तिं वारयितुं दुःखेनाप्यसमकालिकत्वं विशेषणीयमिति केचित् । वस्तुतस्तु, निवृत्तेर्दुःखत्वावच्छिन्नप्रतियोगिताकत्व विवक्षयैवातिव्याप्तेर्वारणम् । यद्यप्यत्यन्ताभाव एव घटत्वाद्यवच्छिन्न प्रतियोगिताकत्वं दृष्टं न प्रागभावप्रध्वंसयोः । तथापीह ध्वंसेऽपि तादृशमङ्गीकार्यं, श्रुत्यादिप्रमाणबलात् । अवश्यं चैतदङ्गीकार्यं, मतान्तरे सृष्टेः पूर्ववर्तिनां प्रागभावानां, प्रलयकालिकानां ध्वंसानां च स्वाश्रयसमवेतदुःखाधिकरणक्षणावृत्तित्वं वाऽऽत्यन्तिकत्वम् ।

यत्तूदयनाचार्यो नित्यसुखाभिव्यक्तिर्मुक्तिरिति तौतातितमतं लिलेख, तद्वार्तिकादर्शननिबन्धनम्। यदाहुर्भट्टपादाः

सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते।
स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः॥
न हि कारणवत्किंचिदक्षयित्वेन गम्यते।
न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्व(मिष्यते)॥

इति श्रीमीमांसकशङ्करभट्टात्मजनीलकण्ठकृतौ भाट्टार्के मोक्षनिरूपणम्।

॥ समाप्तश्चायं ग्रन्थः॥

---

ॐ

# अर्कमाधुरीव्याख्याया उपोद्घातः

## श्रीगणेशाय नमः

इह खलु जगतीतले सर्वैः प्राणिभिः काममात्रः पुरुषार्थ ईप्सिततम इति मन्यते। 'पश्वादिभिश्चाविशेषान्मानवैरपि धीमद्भिर्न दूरपर्यन्तं विचार्यते। आहारनिद्रादिष्वेव रन्तुमिष्यते। परं विशिष्टकामोपभोग सम्पत्त्यर्थं अर्थपुरुषार्थे बहुशः प्रयत्यते। तदर्थं च कैश्चित् वाणिज्यं, कैश्चित्सेवा, कैश्चित्तु तस्करत्वमप्युररीक्रियते। एतत्सर्वं यावच्छक्यं बाल्यादारभ्य वार्धक्यपर्यन्तं सततं कृत्वाप्यन्ते हताशा दुःखिता भूत्वा पश्चात्तापभाजो भवन्ति। जघन्यानामयं पन्थाः।

मध्यमास्तु मन्यन्ते—'यद्यपि अर्थकामौ द्वावेव पुरुषार्थौ ईप्सिततमौ तथापि तत्संपादनार्थं पूर्वजैः किं किं कृतं, कस्तेषामनुभवः को वोपायस्तैरुपदिश्यते एतदपि इतिहासं समालोच्य तत्कृतग्रन्थादिपरिशीलनेन च विमृश्य तद्दिशाऽनुष्ठिते प्रयत्ने न स्यात्पश्चात्तापप्रसङ्ग' इति। इतिहासं च दृश्यते—एके नैकसंपन्नधर्मस्यानानां स्वकरालकरवालबलेन संपत्त्यपहारं कृत्वा, अन्ये च विपुलः वाणिज्यद्वारा जगतीतले सर्वोत्कृष्टधनिकाग्रगण्या इति सुप्रसिद्धिं संप्राप्य समुपभुक्ताभीष्टकामोपभोगा अपि मरणसमये आमुष्मिकचिन्तामकृत्वाऽऽयुर्यापनेन 'हा हताः स्म' इत्यवोचन् इति।

पूर्वजर्षिमहर्षिप्रणीतानां समस्तानां ग्रन्थानां परिशीलनं तु सुविमलचातुरीचतुराणां कुशाग्रशेमुषीमतामपि स्वस्वजीवनकालेऽशक्यप्रायम्; निरर्थकं च स्याद्यदि मधुमक्षिकावत् सारग्राहित्वं न स्यात्। अतिविस्तृते ग्रन्थमहोदधौ—

**श्रुतिर्विभिन्ना स्मृतयश्च भिन्नाः**
**नैको मुनिर्यस्य वचः प्रमाणम्।**

एतादृशपरिस्थितौ धिषणाऽऽश्चर्यमग्ना सारग्रहणे कुण्ठितसमस्तशक्तिश्च जायते। अतः किमत्रान्वेषणीयमिति चिन्तातुरं जनं सकलवेद-शास्त्र-पुराणविज्ञो व्यासो निश्चयेनाश्वासयति—''ऊर्ध्वबाहुर्विरौम्येष'''' '' धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते?'' धर्म एव श्रेष्ठः पुरुषार्थः, अर्थकामौ गौणौ, तदुपजीवित्वात्तयोः। 'नादत्तमुपतिष्ठते' 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति वचनानुसारेण यद्यपि धर्म एव जिज्ञास्योऽनुष्ठेयश्च, तथापि—

**'धर्मस्य तत्त्वं निहितं गुहायाम्' इत्युक्तम्**

अस्मिन्गूढे तत्त्वे पुनर्विप्रतिपत्तिबाहुल्येन मतिरमतिर्जायते। आत्मोद्धारचिकीर्षुभिर्जनैः तीव्र-

तया आयासे कृतेऽपि आशंकापिशाचिकायास्तेषां मुक्तिर्न जायते। कोऽत्र पन्थाः ? इति जिज्ञासाया तत्रैवोपायः सूचितः—

**'महाजनो येन गतः स पन्था' इति**

अत्रापि पृच्छचते, कोऽयं महाजन इति ? किं बहुलजनक्षुण्णेन पथ गन्तव्यं, अथवा परिमित-स्वीयशिष्यमात्राणां मार्गदर्शकेन केनचित् संप्रदायविदा सूचितपद्धत्या, यद्वा निष्पक्षपातिना सकलजन-कल्याणाभिलाषिणा निरभिमानिनाऽतएवानिन्दकेन शास्त्राचार्येण दर्शितवर्त्मना गुहास्थं धर्मतत्त्व-मधिगन्तव्यम् ? नाद्यः, यतो 'गतानुगतिको लोको न लोकः पारमार्थिकः'। अजावियूथे केनचिदग्र-गामिना, क्षुण्णेन पथा स्वस्वग्रीवां निम्नीकृत्य गच्छतां यौथिकानामिव 'येनास्य पितरो याताः येन याताः पितामहाः' इति परम्परानिष्ठानां पामराणां अविचारितगमनशीलानामनुगमनं 'अन्धेनैव नीय-माना यथान्धा' इति—**अन्धानुकरणमार्ग एव। न स युज्यते धीमताम्॥**

न द्वितीयः, संप्रदायविदोऽपि पूर्वोक्तैकदेशिन एव। तत्त्वजिज्ञासाय आत्मोद्धारचिकीर्षुभिस्तु ऊर्ध्वत्रिपुण्ड्र-तप्तमुद्रा-क्रास-रुद्राक्षादिमालाधारणपूर्वकं इतरमार्गगामिजननिन्दाभिस्तथा स्वीयमार्ग-मिथ्याप्रशंसार्थं कृतमहोत्सवैः औषध-शिक्षणादिप्रदानैः प्रलोभनैश्च; संप्रदायप्रचारकाणां पाशान्दूरत एव ज्ञात्वा दृढप्रयत्नैः स्वोद्धारमार्ग एव रक्षणीयः। अनेकवादजालैः प्रकृष्टपाण्डित्यादिप्रदर्शनाडम्बरेण डिण्डिमध्वनिपूर्वकं वादविवादैस्तत्र तत्र विजयपत्राणि संजिघृक्षून्प्रतिवादिभयंकरान् दूरतश्च नमस्कृत्य सारमात्रसंजिघृक्षुभिर्मुमुक्षुभिरुपेक्षणीया एवैते। विप्रलम्भकाणां मार्गानुसरणेन नात्मानमवसादयेदपि तु 'आत्मैव ह्यात्मनो बन्धुः········येनात्मैवात्मना जित' इति भगवदुपदेशानुसारेण स्वप्रयत्नेनैव स्वोद्धारः करणीयः। तत्रापि 'लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति' इत्येवं स्थितिर्निष्टा। अतः वेदशास्त्ररूपचक्षुर्भ्यां, निरभिमाः शास्त्राचार्यसहायेन चाग्रे मोक्षपथक्रमणमावश्यकम्। 'न हि पूर्वजो मूढ आसीदित्यामनापि मूढेन भाव्यमि'त्यभियुक्तोक्तेः।

शास्त्राचार्यास्तु न विप्रलम्भकाः, न च तेऽपरनिन्दकाः, यतस्तेऽन्येषामप्यादरेणोल्लेखं कुर्वन्ति। तत्पक्षस्यापि विचिकित्सां कुर्वन्ति नोपहसन्ति जिज्ञासुजनैः यथेच्छं यावद्बुद्धिबलादेयमाशंक्य स्वसंपूर्ण-समाधानपर्यन्तं न प्रतिरोधः, न च तथाकरणे विभीषिका, एव एष महाजनानुसृतो मार्गः। अतः मुमुक्षुभिः धीमद्भिः शास्त्राण्येव परिशीलनीयानि। तानि चोपदिष्टानि महर्षिणा याज्ञवल्क्येन—

**पुराणन्यायमीमांसा धर्मशास्त्राङ्ग मिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥**

तेनार्थकामलिप्सुभिरपि तत्सम्पादनाय धर्मशास्त्रविचारोऽवश्यं कर्तव्यः।

उत्तमाः पुनः सकलविद्यास्थानानां स्वमत्यनुसारेण तात्पर्यं ज्ञात्वा अर्थकामोपभोगेषु संयमेन धर्मं सम्पाद्य, प्रभूतधर्माचरणेन यथेच्छं अर्थकामोपभोगानुपभुज्यापि न सन्तुष्यन्ति। 'त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुत' इत्यनुभवसिद्धत्वात्। आत्यन्तिकी दुःखनिवृत्तिः, सर्वोत्कृष्टानन्दप्राप्तिरेव च अपेक्षिता। सा च नार्थकामपरस्यापि तु धर्मपरस्यैव, तत्रापि कर्मसु कौशलरूपेण कर्मयोगेनैव 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्युक्तेः। धर्माचरणस्याप्यन्तिमं साध्यं नार्थकामसंपादनमपि तु मोक्षा-सादनमेव तदुक्तं श्रीमद्भागवते—

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽयोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥ इति

अतः सकामकर्मणां क्रमेण त्यागपूर्वकं कर्मयोग-भक्तियोग-ज्ञान-योगमार्गेण क्रमशः मोक्षमार्गक्रमणे प्रथमं तत्त्वस्य-धर्मतत्त्वस्य जिज्ञासाऽवश्यंकर्तव्या । एतदभिप्रायेणैव भगवाञ्जैमिनिः प्रथमं सूत्रयामास—'**अथातो धर्मजिज्ञासा**' इति ।

चतुर्दशसु विद्यास्थानेष्वपि पद-वाक्य-प्रमाणानि व्याकरण-मीमांसा-तर्कशास्त्राणि सारग्राहिमुमुक्षुदृष्ट्याऽत्यन्तं महत्त्वमादधते इतरशास्त्रापेक्षया । तत्रापि 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकमिति तर्कव्याकरणशास्त्रे भृत्यवत् सहायभूतानि । सर्वप्रधानं सकलशास्त्रोपजीव्यं शास्त्रं तु मीमांसाशास्त्रमेव ।

'यदि मीमांसा न स्यात्' आस्तिक-नास्तिक दर्शन भेद एव विलुप्येत । बाह्यालोकायतिकसुगतजैना अपि स्वीयमतप्रामाण्याय पूर्वापरपरामर्शविकलानि वैदिकादिवचनानि उद्धरेयुः । तद्यथा—'न सुरां पिबेदि'त्यत्र 'सुरां पिबेत्' एतावन्मात्रं प्रमाणीकृत्य चार्वाकाः, 'नेह नानास्ति' इति शून्यवादिनः 'मा हिंस्यात्सर्वाणि भूतानी'ति आर्हताश्च प्रमाणीकुर्युः । शुष्कतर्कप्राबल्यबलेन जगति संशयपिशाचिकासाम्राज्यमभविष्यत् । भट्टपादानां श्लोकतन्त्रादिवार्तिकपूर्वकाले सर्वा मीमांसाऽपि लोकायतीकृताऽसीत् । अधुना मीमांसाशास्त्रं हि वाक्यशास्त्रं आरभ्याधीतानारभ्याधीतादिसमस्तवचनानां शेषशेषिभाव प्रकृतिविकृतिविचारपूर्वकं तात्पर्यनिर्णायकम् । तथा सति स्वस्वमतापेक्षितवचनं 'सुरां पिबेदि'त्यादि न तन्मतसमर्थकमपि तु संपूर्ण तत् बाह्यमतखण्डकमिति एतद्वाक्यशास्त्रं सर्वशास्त्राग्रणीः, वादेषु मध्यस्थवच्छास्त्रान्तर संचारप्रतिरोधकत्वात् । स्वीयवैदिकविषयसमर्थनेन समेषां मानवानां संशयनिराकरणपूर्वकं स्वकल्याणकारि पथ प्रदर्शकत्वाच्च । अत एवोक्तमत्र भवद्भिर्भट्टोदभट्टैः—
**"मीमांसा हि सर्वास्तिकशास्त्राणामग्रणीः, सर्वपुरुषार्थसाधन परिज्ञान स्यैतन्निबन्धनत्वात्"** । इति ॥
**ता० टी० पृ० १६-२० ।**

## मीमांसाशास्त्रप्रस्थानानि

पूर्वं मीमांसासूत्र-शबरस्वामिभाष्यरूपदर्शनसमर्थकाः भर्तृप्रपञ्चभवदासादयोऽभूवन् । तैश्चास्तिकपथे आस्थां दर्शयद्भिरपि विपरीतार्थवर्णनद्वारा नानाऽपसिद्धान्ताङ्गीकारेणाकुलीकृतमासीत्सर्वं प्राचीनतमं शाबरभाष्यम् । तथाहि—सत्स्मृतिसदाचाराणां कारणं विनापि धर्मे प्रामाण्यनिराकरणं, विधिनिषेधयोरिष्ठानिष्टफलाजनकत्वं यतो ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र स्वर्गकामपदं न फलसमर्थकमपितु कर्मस्तावकमात्रं, अतो न पृथगर्थवादापेक्षा, न वाऽर्थवादानां प्रामाण्यमित्याद्यनेकापसिद्धान्ताः सिद्धान्तरूपेणोररीकृता आसन् अत एवोल्लिखितं तद्भट्टपादैः लोकायतिकपदेन । तथा च—

**प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।**
**तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ श्लोकवा० १-१-१०**

(१) संपूर्णस्यानेकशाखाभेदभिन्नस्य वेदराशेर्वाक्यार्थनियमानुसारेण सम्यग्व्यवस्थां कृत्वा

सुगतजैनादीनामनुपपत्तिप्रदर्शनपूर्वकं सर्वमान्योपपत्तिं भट्टपादैः स्वीयग्रन्थेः कृत्वा सरस्वतीं ज्ञानखलादानीय सार्थवतीकृतो वैदिकधर्मस्योज्जीवनं कृतम्। अत एव 'व्यवहारे भाट्टनय' इतीतरशास्त्रकृद्भिर्मन्यते। तदेतन्मुख्यं भाट्टप्रस्थानं मीमांसाशास्त्रस्य'।

(२) अध्यापनविधिकृताध्ययनान्विताभिधानवादाख्याति-अपूर्वादिनवीनसिद्धान्ताङ्गीकारेण गुरुभिः मीमांसाद्वितीय प्रस्थानं प्रतिष्ठापितम्। विशिष्टाद्वैतवादिरामानुजीयैस्तदनुमन्यते। बृहती टीकामारभ्य प्रकरणपंचिकापर्यन्तं तद्ग्रन्थाः समुपलभ्यन्ते।

(३) 'मुरारेस्तृतीयः पन्थाः' इत्याभाणकोल्लेखेन प्रथितं मुरारिमिश्राणां तृतीयं प्रस्थानम्। तत्प्रभावः शास्त्रे कियानासीदिति—

**देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं**
**जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः।**
**अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतां**
**आपातालनिमग्नपीवरतनुर्जानाति मन्थाचलः॥**

एतत्प्रसिद्धश्लोकेनैव सिध्यति। तथापि तन्मतग्रन्थोपलब्धिरधुना विरलतरा। टीकासु तत्र तत्र तन्मतोल्लेखो दृश्यते। 'त्रिपादनीतिनयन' नामकग्रन्थांशमात्रमस्योपलभ्यते।

## कालातिपातप्रभावस्य परिणामः

एस्० सुब्रह्मण्यशास्त्रिभिः अधुनोपलभ्यमानभट्टप्रस्थानग्रन्थोपोद्बलेन प्रकरणपंचिकाग्रन्थान्ते भाट्टगुरुमतयो र्भेदप्रदर्शनी टिप्पणी प्रकाशिता। तत्रोल्लिखितभाट्टाङ्गीकृतद्रव्यगुणादिपदार्थेपु तथा प्रस्तुतभाट्टार्कप्रतिपादिततादृशपदार्थेपु महदन्तरं दरीदृश्यते। अल्पश्रुतत्वात्संपूर्णभट्टपादग्रन्थापर्यालोचनात्तेषामयं प्रमाद इति लिखितुं न ममाशयः किन्तु अन्यस्मादेव संभवनीयकारणादेतत्प्रामादिकमिति मे मतिः।

आंग्लभाषामयप्रस्तावनायां ग्रन्थकारस्य संपूर्णवंशेतिहासमुल्लिख्य अस्माभिः भाट्टार्कग्रन्थस्य कालः ऐशवीय १६४०-४५ इति निश्चितः। **भाट्टार्कग्रन्थ** प्रणेतारः नीलकण्ठभट्टचरणाः विद्यावंशपरम्परया तथा जन्मवंशपरम्परया चाखण्डितमीमांसक संप्रदायप्रवर्तकाः आसन्निति तदितिहास एव समर्थयति। तत्कालीनाः येऽन्ये मीमांसकाचार्याः ग्रन्थे परामृष्टास्तेषां नामाप्यधुना श्रुतिपथं नायाति। सार्धत्रिशतसंवत्सरकालातिपातेन भट्टसंप्रदायविषयेऽयं सिद्धान्तदुर्विपाकः स्यादिति तर्कयामहे। भट्टपादानां बृहट्टीका, मध्यमटीका चाधुना नोपलभ्येते, केवलं लघ्वीटीका—श्लोकवार्तिक-तन्त्रवार्तिक-टुप्टीकामात्रमुपजीव्यायं भट्टसिद्धान्तविकारोऽनुभूयते। भाट्टार्कसमपेतुसर्वे भट्टग्रन्थाः पाठ्यमानाः आसन्। अतो वस्तुतो भट्टाङ्गीकृतपदार्थाः भाट्टार्कनिरूपिता एवेति विद्वद्भिरवधारणीयम्। परीक्षकाणां कृते किंचिद्दिग्दर्शनं क्रियते—

| प्र० पं० प्रकाशितभट्टमतं | भाट्टार्कमतं | प्र० पं० गुरुमतम् |
|---|---|---|
| **पदार्थाः—** द्रव्यगुणकर्मसामान्याभावाः ५ | द्रव्यगुणकर्मसामान्य शक्ति संख्या विषयता वैशिष्ट्य भेदात् ८ अभावः रूपादिवद्धर्मः, सादृश्यं खण्डितम् । | द्रव्यगुणकर्मसामान्यशक्ति सादृश्यसंख्यासमवायाः ८ |
| **द्रव्याणि—** पृथिव्यादि ९ शब्दस्तमश्च | तच्च दशधा । पृथिव्यादि—मनोवर्णभेदात् तमोऽपीति परेमिश्राः । | पृथिव्यप्तेजो····मनांसि ९ |

मोक्षविषये—'न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वमिष्यते' इत्येवोभयोर्मतं तथापि कंचित् सर्वदर्शनसंग्रहटीकाकाराः । 'स्वर्ग एव मीमांसकानां मोक्ष'इति प्रतिपादयन्ति । तत्रापि कारणं किं तेषामल्पश्रुतत्वं, कालातिपात एव वेति विचक्षणैर्विचारणीयम् ।

## उपसंहारः

एवं भाट्टसंप्रदायपरम्पराप्राप्तः प्राचीनोऽयं भाट्टार्कग्रन्थः भट्टवंशजेन प्रणीतः, विशेषतोऽन्यत्र दुर्लभपदार्थविषयकमीमांसकाविष्कारसमर्थकः, अत एवात्यन्तं महत्त्वपूर्णः । अस्य च माधुर्यं व्याख्यया नोपबृंहितं चेदधुनातनसमये सामान्यान्तर्गत एव मन्येत इति मनसिकृत्वानेन जनेन यथामति यथावकाशं च गंगनाथ झा केन्द्रीयसंस्कृतविद्यापीठे कार्यं कुर्वता 'अर्कमाधुरी'व्याख्ययाऽयं समलङ्कृतः । सम्पादनकार्ये नैकास्त्रुटयोऽप्यासन्; समेषां यथाशक्त्युन्मूलने यत्नः कृतः । अस्मिन्कार्ये पूर्वसंग्रहालयाध्यक्षाः डॉ० ब्रह्मदत्तमहाभागाः ममैतत्कार्ये प्रवर्तकाः नैकविधसहाय्यकर्तारश्चासन् । तैर्बहूपकृतोस्मीति धन्यवादार्हास्ते । मन्ये चास्य भाट्टार्कग्रन्थस्य प्रकाशनेन भट्टपादास्तदनुयायिविद्वांसश्च सन्तुष्येयुरिति शम् ॥

शास्त्रं वैदिकमीमांसाः यज्ञो नारायणः स्वयम् ।
आचार्या भाट्टपादाश्च सन्तु मे जन्यसार्थकाः ॥

**अनंतत्र्यंबकशास्त्री पिंगले**
Sub Editor, Deccon College, Poona—6

ॐ

श्रीगणेशाय नमः

# अर्कमाधुरीव्याख्या

योऽन्तः प्रविश्य मम लेखनमातनोति
शास्त्राणि सर्वविषयाणि पुरः करोति ।
तद्विप्रतीपप्रतिकूलसमस्तयुक्ती—
स्तस्मै नमो भगवते पुरुषोत्तमाय ॥

## मङ्गलाधिकारः

भाट्टग्रन्थरहस्यं शास्त्रीयरीत्या व्याचक्षाणः ग्रन्थकारः अविगीतशिष्टाचारानुमितश्रुत्यनुसारेण मङ्गलाचरणं करोति **सुपर्वेति** । तत् प्रसिद्धं, सर्वद्विजजनोपास्यत्वात्, धाम तेजः, वरेण्यं भर्ग सुमहतोऽपि महत् **समुपाश्रये** ध्यायामि, न दूरतो नमस्करोमि । एतेन सकलधर्माणां परमधर्मत्वं ध्यानस्य द्योत्यते । गायत्रीमन्त्रप्रतिपादितधामध्यानमेव परमधर्मः तदुक्तं योगीश्वरेण याज्ञवल्क्येन ।

इज्याचारदमाहिंसा दानस्वाध्यायकर्मणाम् ।
अयं हि परमो धर्मो यद्योगेनात्मदर्शनम् ॥ इति

तच्च धामध्यानमुपासकानां महद्धामलाभप्रदमित्याह **सुपर्वेति** । **सुपर्वपर्वतः** तेजोमयः सौवर्णः सुमेरुपर्वतः, तत्र तेजोरूपलोकपालानां वसतिस्थानत्वेन तस्य योऽखर्वः असीमः गर्वः तन्निर्वापणे तुच्छीकरणे, **उद्धुरं** उद्युक्त समर्थं ततोऽपि महत् व्यापक प्रभावि च ब्रह्मवर्चसादि धाम यतो यदुपासनेन लभ्यमनुभाव्यं तच्चिन्तनस्य परममङ्गलत्वेन तत्समुपाश्रये ।

'न तत्र सूर्यो भाति न चन्द्रतारका नेमा विद्युतो भान्ति कुतोऽयमग्निः' इति श्रुतेः । एतादृशमहद्धाम्नः जड़े सुमेरुतेजोगर्वहरणे सामर्थ्यं वर्तत इति किमु वक्तव्यम् ?

'या इष्टा विशिष्टा हृष्टा देवता सैवेष्टप्रदा' इति न्यायेन न केवलं ध्यानस्थशिववर्णनं कृतमपित्वानन्देन सुयोग्यरंगमञ्चे समुचितनृत्यसमये ताण्डवनृत्यमग्नं चण्डीपतिं उपवर्ण्यादौ मङ्गलं करोति **भ्राम्यदिति** । ककुप्प्रान्तस्य धाराधरे रंगे चण्डीपतेस्ताण्डवं । सोऽपि धाराधरः पर्वतः न लोकमध्यस्थः कोलाहलसंभवनीयविक्षेपः, अपि तु ककुप्प्रान्तस्थः दिगन्तस्थलीयः ।

ननु तर्हि तत्रान्धकारः स्यादिति चेन्न, सान्ध्यकिरणैः सुशोभितत्वात् तस्य तत्कालस्य च । अपि च तत्रोत्कृष्टप्रदीपाः भगवल्ललाटसंस्थशशिकोटिकरैर्भ्राजमानरूपाः विलसन्ति । स च धाराधरः गङ्गाजलेन प्लावितः ।

यद्यपि गङ्गा प्रचण्डजटाजूटमध्ये सुगुप्तं रक्षिता तथापि नृत्येन मुक्तजटाभ्य: त्वरया गलति तज्जलं, तेन रंगमंच: विशुद्ध: प्रसादयुक्त: कृतोऽस्ति। वाद्यं किं तत्रेत्यपेक्षायामाह **डमरुमदिति** भगवतो भूतिभासितत्वात् शुभ्र रजोविलेपनापेक्षाऽपि संपूर्णा। एवं सकलसामग्रीयुक्तत्वात् नृत्यमग्नस्य भगवतः तत्ताण्डवं नः ऐश्वर्यप्रदायि भूयात्।

रामपंचायतनं हृदि भावयति **श्रीराममिति**। महद्धाम्नोंऽशभूतत्वात्सर्वदेवानां आचार्यगुर्वादीनां च, उपास्यभूतानां स्मरणेन ग्रन्थारम्भ: कृत:। ज्येष्ठभ्रातृभक्तस्य ग्रन्थकारस्य श्रीरामोत्तर भरतोपनिदेश: शोभते। सीतया पतिव्रतया, हनूमता चादर्शभक्तेनोपास्यमानं धर्मिष्ठतरं श्रीरामं हृदि भक्तिपूर्वकं सर्वदा चिन्तयामि।

योगेश्वरस्यात एव वन्दनीयसकलदेवसमूहैरपि वन्दितस्य क्रीडतोऽर्थात् हृष्टस्य श्रीगोपालकृष्णस्य चिन्तनेन मङ्गलं वितनुते **वन्दारुवृन्दारकेत्यादि**। मङ्गलरूपदेवानामपि मङ्गलभूत: स इह वृन्दावने गोपरूपेण गो-वत्ससमूहैः तथा भक्तशिरोमणिगोपाङ्गनाभिश्च क्रीडां चकार। आनन्दमय: स भगवान् न: नित्यानन्दाय भूयात्।

प्रवृत्तिनिवृत्तिपरयोः पूर्वोत्तराख्यमीमांसयोः द्वित्वसूचनायेव स्वयमेकाद्वैतरूपोऽपि उमादेहार्धधारी भूत्वा परः पुमान् श्रीशिवः अर्धनारीनटेश्वररूपेणोभयात्मक: संजातः इति पुराणप्रसिद्धवस्तुस्मारणेन प्रकृतग्रन्थस्य विषयं सूचयति **विरोधीत्यादिना**। प्रवृत्तिमार्गप्रतिपादकपूर्वमीमांसायाः निवृत्तिमार्गपरकोत्तरमीमांसया विरोध: प्रसिद्धः, द्वैताद्वैतरूपत्वात्। एतेन उत्तरमीमांसाया येऽनेकसंप्रदायाः प्रचलिता: तेषु मुख्योऽद्वैतसंप्रदाय एव ग्रन्थकाराभिमत: इति सिध्यति, अन्यथा विरोधित्वं न स्यात्। श्रीकाशीविश्वनाथरूप: सद्गुरुः श्रीशङ्करभट्ट: तयो: मार्गयो: समन्वयो वर्तते, न विरोधित्वमिति साधनाय स्वयं एकरूपेण तन्मीमांसकद्वैतनिराकरणेन अद्वैतं उरीचकार—परस्परापेक्षत्वादुभयोरैक्यं स्वीचक्रे। 'उभयापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यादिब्रह्मसूत्रानुसारेण। विस्तरस्तु भूमिकायां द्रष्टव्य:।

श्रीगुरुशङ्करभट्ट-जगद्गुरुविश्वनाथयोः श्लेषालङ्कारेण साम्यमुपवर्ण्य ऐक्यं सूचयन् तस्य मङ्गलरूपत्वाच्चिन्तयति **द्विजराजेत्यादि**। यस्य मूर्धन्येषु जटासु मध्ये एकभागे द्विजराजश्चन्द्रमा: विलसति। गुरुरपि श्रेष्ठेषु विप्रेषु मध्येऽग्रगण्य: तेन द्विजराजैकमूर्धन्य:। नन्दिकेश्वरे आरुढत्वात् वृषाध्यक्षः, अयमपि वृषस्य धर्मस्याचार्यः। उमादेहार्धधारित्वात् शिवान्वितो भगवान्, गुरुरपि मङ्गलमयविद्यायुक्त:। विश्वेश:अविमुक्तक्षेत्रे काश्यां मरणसमये सर्वान् प्रणवोपदेशं करोतीति उपनिषत्प्रसिद्धं, तथाऽयमपि तत्रैव सकलशिष्येभ्य: जिज्ञासुभ्य उपदेशं ददाति। एवं शङ्कराख्याचार्यं भावये। अत्र प्रतिपाद्यप्रतिपादकसंबन्धोऽधिकारीत्याद्यनुबन्धाः व्यज्यन्ते।

ग्रन्थकारः पुनर्मङ्गलमयधाम, यन्नो धिय:प्रचोदयति; तथा सद्गुरुपाठितवचनानि आकलय्य ग्रन्थं प्रतिजानीते **महदिति** 'पितृदेवो भव', इति आज्ञानुसारं पुन: शङ्करभट्टं पितृत्वेन प्रणम्य 'ज्येष्ठो भ्राता पितु: सम' इति स्मृतिवचनानुसारं सकलज्येष्ठभ्रातॄन् आदरेण स्मृत्वा नीलकण्ठः नम्रतापूर्वकं निष्कृष्टविषयोल्लेखं करोति **भाट्ट इति** भट्टसंमतपदार्था: येऽस्य मीमांसाशास्त्रस्याधारभूता:, यथामति विवेकेन तेषां विवरणं प्रतिजानामीत्यर्थः। एतादृशपदार्थविवेचकग्रन्थाभावात् अनेक भाट्टानुयायिमीमांसकपण्डिता अपि कथमपि पदार्थविषये संदिग्धरूपेण वा तार्किकमतप्रभावेण वा ग्रन्थप्रणयनं कृतवन्त इति सम्यग्ज्ञात्वा प्रमाणितपदार्थविवेचनप्रतिज्ञा सुयोग्याऽऽवश्यकी चेति।

## प्रमेयपदार्थाधिकारः

पदार्थविषयिणी प्रतिज्ञा कृता; तत्र पदार्थः क इति जिज्ञासायामाह **प्रमाविषय इति**। प्रमापदेन ज्ञानान्तर्गतभ्रमनिरासः कृतः। अन्यथा पदस्य वाचकस्यार्थत्वात् विषयत्वात् भ्रमविषयोऽपि प्रसज्येत। तत्रातिव्याप्तिः प्रमापदेन निरस्तेत्यर्थः। प्रमेयत्वं सर्वत्रोपलभ्यत्वात् तस्य व्यतिरेकः कुत्रापि कदापि च नोपलभ्यते, तेन तत् केवलान्वयि। तस्य व्यापकत्वात् सार्वदिकत्वाच्च न धर्मत्वं, अपि तु नित्या शक्तिः। धर्मत्वे धर्म्यधीनत्वात् धर्मिणश्च त्रैकालिकत्वाभावाच्च परिच्छिन्नत्वसंभवेन च नित्यशक्त्यङ्गीकारः। विषयिणः ज्ञानस्य विषयो ज्ञेयोऽतस्तत्र ज्ञेयत्वे विषयतासंबन्धेन शक्तिरस्त्येव। तदवच्छेदकं तद्व्यापकत्वे सति तद्व्याप्यत्वरूपधर्मः वाच्यत्वम् नान्यः इति एवकारकृत्यम्।

खपुष्पादौ अत्यन्तासति अतिव्याप्तिशङ्कानिवारणाय केवलान्वयित्वस्य निष्कृष्टं लक्षणमाह **केवलान्वयित्वं हीति**। प्रमेयत्वादेः कुत्राप्यभावाभावात् न तस्याभावप्रतियोगित्वमिति लक्षणसमन्वयः। असतश्च भाव एव नास्ति कुतो भावः, अतस्तत्रातिव्याप्तिनिराकरणात्, यद्यपि वाच्यत्वमवच्छेदकं तत्रापि वर्तते। तस्य वृत्तिमत्त्वं तु दूरापास्तम्।

तथाप्यस्ति अत्रायं प्रश्नः खपुष्पादि अस्ति न वेति? अस्ति चेत्तस्य प्रमेयत्वं वर्त्तते न वा? आद्येऽतिव्याप्तिः। द्वितीये अत्यन्ताभाव एव तस्य स्याद् गगनाभाववत्, तद्वारणाय केचिन्निष्कृष्टं केवलान्वयित्वं लक्षयाञ्चक्रुः **वृत्तिमदिति** गगनस्य वृत्तिनियामकसंबन्धेनावर्तमानत्वात्। तत्राव्याप्तिः तन्निवारणमभावस्य वृत्तिमत् विशेषणेन कृतमित्यर्थः। अभावाभावस्य प्रतियोगिरूपत्वेन गगनाभावाभावो गगनरूपः प्रतियोगी अप्रतियोगित्वं नास्ति तत्साधनाय विशेषणावश्यकता। परं सिद्धान्ते तादृशस्य गगनाभावाभावस्यास्वीकारेणाव्याप्तिशङ्कैव नास्ति। अस्वीकारे कारणं विवृणोति **आकाशवतीति वक्तुमशक्यत्वात् इति**।

घटे पटत्वेन प्रमेयं नास्ति, पटे घटत्वेन प्रमेयाभाव इत्यादिव्यधिकरणधर्मावच्छिन्नाभावप्रतियोगित्वं प्रमेयेऽस्ति तद्वारणं कथं भवतीति अन्यत्र द्रष्टव्यम्।

## भावत्वाधिकारः

एवं पदार्थस्य सद्रूपत्वेन भावस्येवाभावस्यापि पदार्थत्वात्सद्रूपत्वं सिद्धांतसिद्धत्वेनाह **द्वेधेति**। भावत्वं जातिरुपाधिर्वेत्यत्र विप्रतिपत्तीर्दर्शयति **भावत्वमिति**। जातेर्जाताववर्तमानत्वेनाव्याप्तिः स्यात्, तेनायुक्तं जातिकल्पनमित्याह **कल्पितताया इति**। कल्पितभावत्वजातेः द्रव्यत्वादिजात्यन्तरे वर्तमानत्वेऽपि स्वस्मिन् भावत्वे न भावत्वं स्यादात्माश्रयत्वात्तेन सकलभावेषु तन्निष्ठाऽसंभवादव्याप्तिः स्यात् भावत्वेऽपि भावत्वत्जातिः तत्राप्यन्येति कल्पने आत्माश्रयान्योन्याश्रयचक्रक्रमेणानवस्थादोषः प्रसज्येत। अतो भावत्वजातिकल्पना नोपपद्यते।

तार्किकैकदेशिमतं व्याचक्षे **द्रव्याद्यष्टकेत्यादि**। द्रव्यमारभ्य समवायान्तेष्टके प्रत्येकं भावत्वमभिमतं न व्यासक्तमष्टके इति साधनायान्यतमत्वं लक्षयति **अन्यतमत्वन्त्विति**। अत्यन्ताभावाभावस्य प्रतियोगिस्वरूपत्वेन अष्टके व्यासक्तं लक्षणं स्यात्तदनिष्टम्। अन्योन्याभावभेदस्तु प्रतियोगितावच्छेदकरूपत्वेन एकैकभावो लक्ष्यो भवतीति अत्यन्ताभावः न लक्षणेऽन्तर्भावितः। लक्षणसमन्वयेन

प्रत्येकस्मिन् भावत्वं दर्शयति तेनेति । आदिना गुणत्वादि संग्रहः । द्रव्यत्वधर्मावच्छिन्न-प्रतियोगिता गुणादौ, अतद्भेदभिन्नतावच्च द्रव्यं, तद्भावान्यत्वं गुणादौ द्रव्ये च प्रत्येकम् । व्यासवते अतद्भेदेत्यादि न युज्येत भावत्वस्यैतादृशलक्षणादिपरिहाराय अन्यदेव लक्षणं अपरे चक्रुस्तथापि तत्राभावत्वलक्षणापेक्षायामाह तादृशेति । अखण्डोपाधिः असमवेतत्वे सत्यनुगतः । यत्र सामान्य-विशेषसमवायेषु प्रत्येकं भावत्वं समस्ति, तत्रैकाधिकरण्येन सत्ताप्यस्ति तेन लक्षणसमन्वयः । न चाभावेऽतिव्याप्तिः, तत्रोक्तान्यतरसंबन्धेन सत्ता नास्ति, किन्तु विशेषणतासंबन्धेन । विपर्यये अखण्डोपाधित्वानङ्गीकारे, अभावभिन्नत्वस्य भेदप्रतियोगित्वेन, भेदभिन्नत्वस्य भेदरूपप्रतियोगिज्ञाना-धीनत्वेन स्वस्कन्धारोहणवत् आत्माश्रयदोषः प्रसज्येत ।

"सामान्यं वोपाधिर्वा भावत्वं" इत्यत्र प्रत्येकवर्तित्वे सति अष्टकेऽपि वर्तमानं भावत्वं न केनापि लक्षितं । तथान्यतरसमवायसम्बन्धेन भावत्वं सामान्यादौ, सामानाधिकरण्यरूपान्यतरसंबन्धेन च द्रव्यादौ नास्ति तेन नव्यमतमपि असम्भवग्रस्तं; नहि गुणादौ समवाय एव सामान्यादौ च सामानाधि-करण्य एव सम्बन्ध इति मनुवचनम् । अतः अन्योन्याश्रयग्रस्तत्वात् अपरेषां मतमपि नोपपद्यते इति कृत्वा स्वमतमाचष्टे—'**वस्तुतस्तु**' इति । स्वस्मिन् अष्टके । सत्ता वैशेषिकाभिमता द्रव्यादित्रिके वर्तमाना परमसामान्यरूपा । परं वस्तुतः तदपरसामान्यमेव भावत्वमेव परं सामान्यं, सामान्यादिष्वपि वृत्तेः । सा सत्तोपाधिरेव, जातिः भावत्वं सकलपदार्थानां सद्रूपत्वात् इत्याह **शत्रन्तस्येत्यादि** ।

## भावप्रकाराधिकारः

पदार्थापरपर्यायभावान् विवृणोति **स चेति** । तेषु आद्यचतुष्टयं वैशेषिकाभिमतं अस्मदिष्टमेव । शक्तिसंख्येऽतिरिक्ते साधयिष्येते । विषयता नव्यनैयायिकाभिमताऽग्रे विभागसहिता सेत्स्यति । वैशिष्ट्यं च न केवलं समवायात्मकं अपितु शब्दार्थसंबन्धादिरूपेण, सिद्धान्तेऽङ्गीकृतत्वात् तस्यातिरिक्त-भावत्वम् अभावस्य घटत्वादिवद्धर्मत्वेन अभ्युपगमान्नातिरिक्तत्वम् । एवं चाष्टौ भावप्रकाराः । आर्हता-दिवदेकदेश्यभिमतं वैलक्षण्यं नातिरिक्तं किन्तु सादृश्याभाव एव इति नैयायिकमतेनापाकरोति **परे-स्त्विति** । वैदिकलिङादिनिष्ठा प्रेरणारूपा शाब्दीभावना गुरुमतापेक्षया भट्टमते निर्णायकत्वेनेष्टा । तस्याः पदार्थान्तरत्वेन स्वीकारः राणकाख्यतंत्रवार्तिकव्याख्याकारसंमतोऽपि न ग्रंथकारस्याभिमतः, अत आह **राणकमत इति** ।

## द्रव्याधिकारः

द्रव्यत्वं अनेकसमवेतत्वाज्जातिः । तत्सिद्धये तल्लक्षणमाह **समवायिकारणत्वमिति** । नन्वेत-ल्लक्षणमाकाशादिष्वव्याप्तं, तेषां कार्यनिरूपितसमवायिकारणत्वविरहादिति चेद्द्वितीयं लक्षणमाह **गुणाश्रयत्वमिति** । समवायेनेति शेषः ।

ननु कार्यद्रव्यस्योत्पत्त्यनन्तरं क्षणमात्रं गुणरहितस्थितेः इष्टत्वादव्याप्तिरिति चेत्तस्य निष्कृष्टं लक्षणमाह **तत्तु इति** । रूपादीनां गुणानां अनेकत्वात्तदेकगुणाधिकरणस्यापि तदितरगुणात्यन्ताभावाधि-करणत्वादेव न लक्षणसंभव इत्यत आह **गुणत्वावच्छिन्नेत्यादि** गुणत्वावच्छिन्नप्रतियोगिता-काद्यभावः तदत्यन्ताभावे नास्तीति तत्रातिव्याप्तिः स्यात्तथापि भावत्वे सतीति विशेषणीयम् । एतच्च उदयनाचार्यैर्लक्षणावल्यां लक्षितं द्रव्यत्वलक्षणम् । शब्दान्तर्गतध्वनेः वायुगुणत्वात्, वर्णानां च नित्यत्वेन

गुणत्वासंभवाद्द्रव्यत्वमिति राद्धान्तः, तेन द्रव्यं दशधा । तमसः न प्रौढप्रकाशकतेजोऽभावरूपत्वं, किन्तु द्रव्यरूपत्वं । तथा तस्य स्वतन्त्रत्वं पृथिव्याद्यन्तर्गतत्वं वा इति विचारस्त्वग्रे भविष्यति । **पार्थसारथिमिश्रैस्तस्यान्तर्भावः** पृथिव्यामङ्गीकृत इत्याह **विरलेत्यादि** । तथैव **मनसोऽपीति** । तद्विषयेऽन्येषामभिप्रायमाह **तैजसमिति** ॥

## पृथिव्यधिकारः

पृथिवीत्वं लक्षयति **गन्धवत्त्वमिति** । तत्तु उत्पत्तिप्रथमक्षणीयघटेऽव्याप्तमतो निष्कृष्टं जातिघटितलक्षणमाह **गन्धेत्यादि**। गन्धासमानाधिकरणगुणः शुक्लरूपं तत्समानाधिकरणा, गन्धसमानाधिकरणा या द्रव्यत्वव्याप्यजातिः तत्समवेतत्वं पृथिवीत्वे इति लक्षणसमन्वयः । लघुलक्षणमाह **शुक्लेत्यादि** । शुक्लेतरं रूपं रक्तपीतादि । निष्कृष्टं पृथिवीत्वलक्षणमाह **गन्धसमवायीत्यादि** । नन्वेतल्लक्षणं मण्यादावव्याप्तं, तत्र गन्धानुपलब्धेरिति चेदाह **मण्यादाविति** । अन्यथा मण्यवयवारब्धे मणिभस्मनि यो गन्धोपलम्भः स आकस्मिकः स्यात् । मणिभस्म मण्यवयवारब्धं इत्यत्र सदृष्टान्तं व्याप्तिनियमं प्रमाणयति **यद्द्रव्यमिति** । अनुद्भूतगन्धाद्यङ्गीकारे कुत्रापि निश्चयेन तदभावो न गृह्येत सर्वत्रानुद्भूतगन्धरसादिशङ्का स्यादतः प्रमाणाभावेन च तदपाकरोति **तन्नेति** । ननु अनुपलब्धिप्रमाणेनाभावप्रत्यक्षं नाशङ्काऽवशिष्येतेति चेत्तत्राह **योग्यमात्रेत्यादि** । जलसंसर्गाभावे तदन्योन्याभावे च प्रत्यक्षीकृतेपि अनुद्भूतगन्धाद्याशङ्का न निवर्तेत । योग्यमात्रप्रतियोगिकयोग्यधर्मावच्छिन्नप्रतियोगिताकोपलम्भाभावस्य प्रत्यक्षत्वे यत्तन्त्रं तदनुसारेण जले गन्धाभावः सिद्धः । योग्यता चात्र प्रतियोगिसत्त्वप्रसंजनप्रतियोगिकत्वरूपा ज्ञेया । तत्र योग्यविशेषणनिवेशस्य प्रयोजनं प्रकटयति **योग्येत्यादिना** अन्यथा गुरुत्वाभावप्रत्यक्षत्वापत्तिः स्यात् । भेदप्रत्यक्षेऽनुयोगिप्रत्यक्षत्वं तन्त्रं न प्रतियोगि प्रत्यक्षं तेनात्र भूतले घटो नेति गुरुत्वावच्छिन्नघटाभावप्रत्यक्षं भवति ।

भस्म तु द्रव्यान्तरम् न तदवयवजन्यं, काणादीयपीलुपाकप्रक्रियया गौतमीयपिठरपाकप्रक्रिययाऽपि च पूर्वरूपगन्धादेः नाशः, रूपगन्धान्तरादेरुत्पत्तिश्च भवति, न भस्मनि गन्धाद्यनुवृत्तिर्भवति, पाकेन नाशात् । दुग्धावयवानां दध्यारम्भकत्वेन मणिगन्धवत्तत्राम्लरसप्रसङ्गः स्यादतो 'यद्द्रव्यं' इत्यादिनियमोऽनुभवविरुद्धः ।

अनुद्भूतगन्धं निरस्य तथैव प्रमाणाभावेनानुद्भूतस्पर्शरूपादि निराकरोति **एतेनेति** । ननु पवनानीतपुष्पावयवभूताणुषु अनुद्भूतरूपस्पर्शौ अनुभूयमानौ नापलपितुं शक्यौ, इति चेत्तत्राह **पवनानीतेत्यादि** । मरीचिसंयोगेनाणुषु प्रत्यक्षीकृतेषु रूपमपि प्रत्यक्षीभवति । तत्स्पर्शे वैमत्यं दर्शयति **स्पर्शस्तु इति** । एवं पृथिवीत्वजातौ लक्षणं विविच्य प्रमाणं दर्शयति **अनुमतव्यवहारादिति** ।

## पृथिवीविभागाधिकारः

अणु कार्यद्रव्याजन्यं मूर्तं इति तार्किकाः, तेन द्व्यणुकपरमाण्वोः त्रुटिना न कार्यकारणभावोऽतो न समवायः समस्ति । तेन चाक्षुषद्रव्यत्वेऽपि नानुकूलतर्कः । त्रुटेः समवायित्वाङ्गीकारे आह **समवायीत्यादि** । त्रुटेःसमवायित्वानङ्गीकारात् । परिमाणापकर्षतारतम्यभूमेः त्र्यणुके विश्रान्तिसंभवश्च । द्व्यणुकनित्यत्वेन त्रुटिप्रत्यक्षे महत्त्वोपपत्तिः ।

संघातवादिबौद्धमतं तार्किका निराकुर्वन्ति **तन्नेति** । परमाणूनामतीन्द्रियत्वाङ्गीकारेण महत्त्वा-

नुपपत्तिः, तथापि तेषां तथात्वे महत्कार्यजनकत्वं कथं स्यात् अतः तन्मतं सिद्धान्ती खण्डयति **वस्तुतस्तु इति** । त्रुटिमात्रपर्यवसाने त्र्यणुकपर्यन्तपरिमाणान्तिमत्वस्वीकारे । अवयवक्रमेण अवयविप्रतीतिः विलक्षणाऽनुभूयते लौकिकव्यवहारे, तथाऽलौकिकेऽपीत्याह **एवं चेति** । शकलैरिति बहुवचनेन, बहुभिरेकवारप्रोक्षणं कर्त्तव्यमिति सिद्धान्तोपपत्तिः युज्यते ।

## पार्थिवकार्यविभागाधिकारः

ननु मरीचिप्रभृतिपुराणप्रसिद्धर्षीणां आद्यं शरीरम् । 'ब्रह्मणो मानसा मान्वादयः पुत्रा' इत्यागमात् । आत्मनोऽवच्छेदकतया भोगसाधनं अन्त्यावयवि शरीरम् । शरीरसयुक्तं अतीन्द्रियं साक्षात्प्रतीतिसाधनं इन्द्रियम् । तत्र सति यस्मिन् गन्धोपलब्धिः उपपद्यते, यस्मिंश्चासति नासौ भवति, तदिन्द्रियं गन्धोपलब्धिसाधनं घ्राणं इत्यन्वयव्यतिरेकाभ्यां घ्राणत्वसिद्धौ 'येनेन्द्रियेण यो गुणो गृह्यते, तद्वता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते इति नियमेन गन्धवत्त्वात्तस्य । परिशेषानुमानेनापि तदेव साधयति **गन्धादिषु इति** । एवकारेण गन्धभिन्नाद्यव्यञ्जकत्वं लभ्यते । घ्राणवत् रसन-चक्षु-त्वगिन्द्रियाणामपि तथैव परिशेषानुमानेन सिद्धिः स्थानं, कारणीभूतजलादिसंबन्धश्चातिदिशति **एवमिति** यद्यपि तार्किकमिश्र-राणकसंमतोऽयं विभागस्तथापि भट्टपादानामेतादृशगौरवापेक्षया लाघवेन तेषां शक्तिविशेषाङ्गीकार एवाभिमतः । घ्राणादीनां पार्थिवत्वजलीयत्वादि यद्यपि अनन्यथासिद्धं तथापि तत्स्वीकारेऽपि गौरवमापतति ।

सजातीयविजातीयेभ्यो लक्ष्यस्य भेद एव लक्षणप्रयोजनम् । सविभागपृथिवीलक्षणरूपेणोत्तरमधुना व्यतिरेक्यनुमानेनेतरभेदं साधयति **पृथिवीतरेभ्यो इत्यादि** । अन्वय्यनुमानाङ्गीकारे दृष्टान्ते पक्षैकदेशे सिद्धसाधनं, सामानाधिकरण्यानुमाने; अवच्छेदकावच्छेदेनानुमाने च उत्पत्तिक्षणावच्छिन्नघटे बाधः स्यादतः व्यतिरेक्यनुमानाङ्गीकार आवश्यकः । हेतोः साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्यतिरेकिव्याप्तिः तदनुसारेण पृथिवी जलादिभिन्नेति सिद्धम् ।

## जलाधिकारः

जलं लक्षयति **जलत्वमिति** । अव्याप्तिवारणाय विशेषणदलं पृथिव्यादावतिव्याप्तिवारणाय च विशेष्यम् । द्वितीयं लक्षणमाह **स्नेहेति** । स्नेहः जले, तदसमानाधिकरणो गुणः गन्धादिः, तत्सामानाधिकरण्यं पृथिव्यादौ, असामानाधिकरण्यं जले इति लक्षणसमन्वयः । तृतीयचतुर्थलक्षणे व्याचक्षते **स्नेहस्थान इति** । शीतस्पर्शसमानाधिकरणगुणासमानाधिकरण-शीतस्पर्शसमानाधिकरणजातिमत्त्वं, एवं नैसर्गिकद्रवत्वेऽपि योज्यम् । नैमित्तिकद्रवत्वं पृथिवी-गुणः सुवर्णस्य तैजसत्वपक्षे च तेजसि तत् षष्ठं लक्षणं निरुक्ति **मधुरेति** । मात्रपदेन पृथिवीवारणं, तत्रेतररसानामपि सामानाधिकरण्यात् ।

## जलीयकार्यविभागाधिकारः

क्षपाकरश्चन्द्रमाः जलीयः । स्थापितानुमानविरोधी करका जलीया अनुष्णाशीतस्पर्शभाववत्त्वात्' इति सत्प्रतिपक्षसंभवेन साधनव्यापकोऽप्ययमुपाधिः । लक्षणद्वारा तस्योपाधित्वं द्रढयति-**यदभावे इति** । आर्द्रेन्धनसंयोगाभावे पर्वते धूमवह्निसंबन्धाभावः उभयाभावापन्नः करकायां अनुष्णाशीतस्पर्शवत्त्वाभावे पृथिवीत्वमात्राभाव प्राप्तः साध्यसाधनसंबन्धभावः । तेनोपधिमत्त्वान्नानुमानेनकरकायाः पृथिवीत्वसिद्धिः ।

## तेजोऽधिकारः

तेजो लक्षयति-**तेजस्त्वमिति**। रूपवद्वृत्तीत्युक्ते पृथिव्यादावतिव्याप्तिस्तद्वारणाय विशेष्यदलम्। ननु तथापि धूमेऽतिव्याप्तिस्तत्र गुरुत्वाभावेन उर्ध्वगत्युपलम्भात् इति चेदाह **न चेति**। नोदनात् प्रेरकसंयोगात्। तन्निवारणाय जातिघटितं द्वितीयं लक्षणमाह **गुरुत्ववद्वृत्तीति**। भास्वरं रूपमेव तेजसि, पृथिव्यादावन्यत्। पृथवीजलवारणाय रसासमानाधिकरणेत्यादि विशेष्यदलम् अन्तिमलक्षणे रूपानधिकरणा जातिर्वायुत्वं तदनधिकरणत्वे सति गुरुत्वाधिकरणा पृथिवीत्वजातिस्तदनधिकरणं तेजस्त्वम्।

भास्वरवत्त्वं निरुच्यते **भास्वरवत्त्वमिति**। तत्तु तेजोगतरूपधर्मः न तेजसः शक्तिरित्याक्षेपं विस्तारपूर्वकं व्याचक्षते **केचित्तु इति**। गुणस्य तद्गतधर्मस्य वाऽभिभवसंभवः, न तु द्रव्यस्य तद्गतशक्तेर्वा इत्याशयः। प्रतीत्यनुसारेण नैतत्संगच्छतेऽतः खण्डयत्ति **तन्नेति**। प्रभा तेज एव न रूपगुणः, उष्णस्पर्शरूपगुणाश्रयवत्वात। अञ्जनादावुपलभ्यमानप्रभायाः विनाश्रयं प्रतीतेः, गुणत्वेऽवश्यं आश्रयापेक्षा भवति।

तेजस्त्वजातिः तेजोगताविशिष्टा या भास्वरा परप्रकाशिका शक्तिस्तत्समवायिकारणतावच्छेदकत्वेन सिध्यति। सुवर्णादौ तेजसि यद्यपि सा नोपलभ्यते तथापि तदवयवेषु जातिघटितलक्षणलक्षितेषु अनुमानद्वारेण तत्सिद्धिः साध्येत्याह **अनुपलभ्यमानेत्यादि**। तादृशतेजोऽवयवाः स्वकार्यभूतावयविनिष्ठद्रव्यत्वव्याप्यतेजस्त्वजातिमन्तः, तेजोद्रव्यासमवायिकारणसंयोगानुयोगित्वात्, तन्तुवत्कपालवद्वा इत्यनुमानस्वरूपम्। एतादृशान्यन्यान्यप्यनुमानानि नैकहेत्ववष्टम्भेन सूचयति **स्पर्शेत्यादि**। अवयविस्पर्शेत्यर्थः। स्पर्शाधारत्वात् अवयवस्पर्शाधारत्वात; कारणगुणाः कार्ये समनुवर्तन्त इति नियमात्। रूपवन्तस्तेजोऽवयवाः अनन्तावयविभूतः, तेषामप्यवयवानामुपलभ्यमानत्वात्, तद्गतरूपेणैव च पाचयत्यत उभयेन्धनम्। ऊष्मा यद्यपि न दृश्यः तथापि अन्यत्रानुपलभ्यमानोष्णस्पर्शेणैव तस्य तेजरूपसिद्धिः।

## तेजोविभागाधिकारः

तेजसि शुक्लमात्ररूपमिति तार्किकमतं प्रतीत्यनुसारेण खण्डयति **तन्नेति**। बाह्यवस्तु इन्धनादि, तत्र तादृशरूपानुपलम्भेऽपि वह्नावुपलब्धेः। भास्वरत्वमपि स्फटिकादावुपलम्भान्न तेजोमात्रनिष्ठम्। अनुद्भूतरूप-स्पर्श-उद्भूतोभय-अनुद्भूतोभयप्रकारैर्यच्चातुर्विध्यं तत्र अनुद्भूतगुणानां गन्धप्रसङ्गे खण्डनेन मानाभावः प्रकाशित एव। हिमांशोश्च शीतस्पर्शवत्त्वादाप्यत्वं पूर्वमेवोक्तम्। हेम्नः पार्थिवत्वादेव न तत्रोष्णस्पर्शः। तैजसत्वे हेतोः प्रयोजकत्वं हेतुत्रयेण साधयति **औष्ण्यानधिकरणत्वादित्यादिना**। न चात्र गन्धवत्त्वोपाधिः शङ्क्यः. रजतादावपि तदुपलम्भात्, उपष्टम्भकभागाधीनत्वस्य तत्रापि सुवचत्वान् सत्प्रतिपक्षत्रयमाह **स्नेहानाश्रयत्व इति**। जलेऽतिव्याप्तिवारणाय विशेषणम्। यथा द्रवत्वकारणतावच्छेदकं सांसिद्धिकनैमित्तिकद्रवत्वयोरनुगतं नास्ति तथाऽनुगते नाश्यतावच्छेदकं नास्ति।

## सुवर्णस्यातैजसत्वाधिकारः

सुवर्णभिन्नतादृशद्रवत्वनाशप्रतियोगिताऽनुमता तेन नाशप्रतियोगिकारणेषु एकशक्ति कल्पनया कारणतावच्छेदकताया एकस्या एव संभवात्। अपि सुवर्णे द्रवत्वसंरक्षकशक्तिकल्पनापेक्षया अग्नि-

संयोगे नाशकशक्तिकल्पना युक्ता, यत्र च नाशः नोपलभ्यते तत्र न सा शक्तिः फलोपहितेति ज्ञेयम्। प्रत्यक्षोपलब्धेऽपि दन्तिनि चीत्कारेणानुमिमतेऽनुमानरसिकाः तथापि अनुमितौ अनुमितिः यथा प्रतिबन्धिका तथा सुवर्णनिष्ठद्रवत्वत्वं नाशप्रतिबन्धकतावच्छेदकं नाशप्रतियोगिकारणत्वभेदेन भवतीति चिन्त्यम्।

श्रौतवचनस्योपपत्तिं दर्शयति—**वह्नेरिति**। अपत्यत्वं न लौकिकपुत्रादिपरत्वेनापि तु सुवर्णस्य अग्निना नाशाभावेन, तत्संयोगजविशुद्धत्वाद्यतिशयेन गौणं ग्राह्यम्।

## वाय्वधिकारः

**वायुलक्षणानि** व्याचक्षते **वायुत्वमिति**। ''बुध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रव। अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः''। तेन स्पर्शाख्यविशेषगुणे वर्तमानत्वेऽपि बुध्यादिषट्के रूपादित्रयेऽवर्तमानजातिः वायुत्वं तद्वत्त्वं प्रथमवायुलक्षणम्। द्वितीये स्पर्शानधिकरणं आकाशादि, रूपवच्च पृथिव्यादित्रिकम्। चतुर्थे संयोगो न विशेषगुणः, स्पर्शारंभकेति आकाशादिवारणाय, विशेष्यं क्षित्यादित्रिकेऽतिव्याप्तिवारणाय। पंचमे मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वं, तेनाकाशादावतिव्याप्तिवारणं, सिद्धान्ते मनसोऽपरिच्छिन्नत्वात्। षष्ठे समवायिकारणद्रव्याणि क्षित्यादिचत्वारि अन्तिमे अवयविवृत्तिजातिः चतुष्टये, नान्यत्र तेन समन्वयो बोध्यः।

वायोर्न प्रत्यक्षत्वं किन्तु रूपरहितस्पर्शेनानुमेयत्वमेवेति मतं विस्तरेणोपपादयति **वायु इति**। ननु धूमस्य पार्थिवस्य स्पर्शरहित रूपवत्त्वमेवमिहापि वायोः रूपरहितस्पर्शवत्त्वं तेनास्य नानुमेयत्वमिति चेन्न; धूमे स्पर्शोपलम्भात्। तथा पुष्पावयव-शीतजलावयवेषु अनुद्भूतत्वान्न रूपस्पर्शौ स्त इति नेत्याह **गन्धवत्सु इति**। तन्मतं खण्डयति त्वगिन्द्रियेण प्रतीतेः। अन्यथा प्रसिद्धप्रत्यक्षाणां पृथिव्यादीनामप्यनुमेयत्वमेव स्यात्। एतेन वायोरनुमेयत्वनिरासेन। तात्पर्याचार्याख्यप्राचीननैयायिकोक्तं प्रत्यक्षत्वे तन्त्रं चेतेनैवानुपपन्नमित्याह **एतेनेति**। रत्ने चन्द्रे च आलोकसंयोग विरहात्, प्रभोष्मणां चोद्भूतरूपस्पर्शमहत्त्वाभावात् तत्राव्याप्तेः गौरवाच्चापास्तमिति।

ननु द्रव्यप्रत्यक्षे तद्गतगुणत्वमपि प्रत्यक्षत्वनियमेन संख्यापरिमाणादेरवश्यं प्रत्यक्षतेति चेन्न; नियमाभावात्। मूर्तचाक्षुषे-स्पार्शने च पृथक् तन्त्रं नैकम्। अथवाऽस्तु एतत् इत्याह **आत्माविषयकेत्यादि**। 'आत्मा मनसा संयुज्यत' इत्यादि क्रमेण। अन्यदाह **आत्मावृत्तीत्यादि**। तत्तन्त्रं खण्डयति **तन्नेति**। आकाशादिषु गुणक्रियादिप्रत्यक्षे नाव्याप्तिः, सामानाधिकरण्यसंबन्धः व्यापकताभेदाद्भिन्नः। आकाशपदेन निर्विकल्पकमेव प्रत्यक्षं विवक्षितम्। आकाशो न शब्दाश्रयः, वर्णस्य द्रव्यरूपत्वात्। तत्र केवलं संयोग एव गुणः न परिमाणादिः। असाधारणहेतुः, स कालः जगत्कारणत्वेन तदाधारत्वेन च कल्प्यते। एवं प्रत्यक्षोऽपि वायुः अनुमानेनापि सिध्यतीत्याह **स्तनितेनेति** भेरीनिनादवत् जलाधारनाववच्च कारणीभूत स्पर्शवद्द्रव्यभूतवायुसिद्धिः।

## वायुविभागाधिकारः

"हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले। उदानः कण्ठ देशे स्याद्व्यानः सर्वशरीरगः" इति स्थानभेदेन विलक्षणतत्तत्स्थानीयक्रियाकारी वायुः पंचधा।

लाघवेन सर्वाणीन्द्रियाणि शक्त्यात्मकानीति पूर्वोक्तमेवात्र त्वगिन्द्रिये निर्दिशति । तार्किकमतं च तत्राह **तार्किकास्तु इति** । हेत्वन्तर्गतैवकार कृत्यमाह **जलेति** । एला जलस्पर्श रसोभयव्यञ्जिकाऽतो न व्यभिचारः । "येनेन्द्रियेण यो भावो गृह्यते तद्गतगुणजाति अभावास्तेनैवन्द्रियेण गृह्यन्त" इति नियमानुसारेणात्रेन्द्रियशक्तिरपि तद्ग्राहिकेत्याह **सा चेति** । तन्मनोयोगः शक्तिमनः संबन्धः । ननु शक्तेः सर्वशरीरव्यापित्वे सर्वदा शरीरभानेन निद्राभङ्ग एव स्यादिति चेन्नेत्याह **पुरीततीति** । अनित्या पाकजेति पृथिवीस्पर्शवारणाय, अनुष्णेत्यादि जलादिस्पर्शनिरासाय विशेषणम् ॥

## गगनाधिकारः

**गगनं** लक्षयति **निस्पर्शेत्यादि** चतुर्भूतवारणाय । एकत्वात् व्यक्त्यभेदरूपजातिबाधकात् । शून्यप्रतीतेः अवकाशानुभवात् ।

ननु चाक्षुषप्रत्यक्षे उद्भूतरूपं कारणं, तदभावे कथमस्य चाक्षुषत्वमिति शङ्कां दृष्टान्तपूर्वकं निराकरोति **क्षणेत्यादिना** । ननु स्मृतौ घटस्य चाक्षुषत्वेऽपि तद्विशेषणानां क्षणादीनां उपनीतभानं, ज्ञानलक्षणया तज्ज्ञानमिति चेन्न; लौकिका लौकिकज्ञानानां विशेष्यविशेषणभावानुपपत्तेः । अपि च सिद्धान्ते नोपनीतभानाङ्गीकारः, अपि तु सौरभांशेऽनुमितिरेव तात्पर्यमाह **मूर्तमात्रस्यैवेति** ।

ननु विशेषणरूपं यदा चक्षुः गृह्णाति तदैव विशिष्टद्रव्यं चाक्षुषं भवति, नान्यथेत्यत्राह **आकाशस्येति** । सुवर्णे चाक्षुषमुपपादयति **सुवर्णोपष्टम्भकेत्यादि** । ननु शून्यप्रतीतेर्विषयः कठिनद्रव्याभाव एव अनुपलब्धिप्रमाणसिद्धः, प्रतियोगिसत्त्वप्रसञ्जनप्रतियोगिकत्वरूपयोग्यतासंपादकं चक्षुः कुलालपितृवदन्यथासिद्धमतो न आकाशचाक्षुषमिति चेदाह **नीलमिति** । अत्र न विशेषणाधारेण चाक्षुषत्वमपि तु अनुभूयमानारोपविशेष्यकत्वेन । आकाशपदस्य शक्यतावच्छेदकं निःस्पर्शभूतस्य निर्विकल्परूपमेवेत्याह **आकाशपदेत्यादि** ॥ दिक्कालयोरपि परममहत्परिमाणं नास्ति, संयोग एवैको गुणः ।

## कालाधिकारः

काललक्षणमाह **चिराचिरेत्यादि** । स च प्रतीत्यनुसारेण जगतः आधारः साधारणहेतुश्चेत्याह **स चेति** । सूर्यपरिस्पन्द एवेदानीमिति प्रतीतेर्न साक्षाद्विषयः इत्याह **नेति** । तत्र परम्परासम्बन्धः संयुक्तसंयुक्तसमवायः, धर्मिग्राहकमानेन संयोगाश्रयतया च काल एव । तन्नघटकः । अन्यथा व्यापकीभूताकाशात्मनोः विनिगमनाविरहः ज्ञानलक्षणया सर्वत्र सर्वधर्मप्रसङ्गश्च ।

स्पन्दक्रियया घटादेर्न साक्षात्संबन्धः संभवति । 'क्रियावान्घट' इत्यत्र विशेषणतैव संबन्ध इति चेदाह **ज्ञानेत्यादि** । अत्र च यद्यपि कालिकसंबन्धघटितत्वम् तथापि नान्योन्याश्रय इत्याह **कालस्येति** । प्रौढिवादेन परम्परासम्बन्धमुपपाद्याधुना सिद्धान्तमाह **वस्तुतस्तु इति** । रूपाद्यभावेऽपि 'येनेन्द्रियेणेति' पूर्वोक्तनियमानुसारेण घटत्ववदुपपद्यते इन्द्रियशक्त्या कालप्रत्यक्षत्वम् ।

तत्राचार्यसंमतिमाह **इदानीमिति** । व्यवहारे कालोपाधीनां सूर्यादिगतस्पन्दानां प्रत्यक्षविषयत्वं साधितम् । ईश्वरात्कालस्य वैलक्षण्यमाह **षडित्यादि** । वचनोपपत्तिमाह **अनादिरिति** । 'कालोऽस्मीति वचनं सर्वोत्कर्षपरं 'द्यूतं छलयतामस्मीतिवत् गौणम् । नैकोपाधिभिर्भिन्नत्वेन प्रतीयमानोऽपि

कालः अखण्डैकरूपः नित्यो विभुश्च, लाघवेन सम्बन्धघटकधर्मिग्राहकमानेनैव च सिद्धः। क्षणलक्षणान्याह **कालेति**। निमेषादिकालोपाधेः सूक्ष्मत्वादव्यापकः। 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठती'ति नियमेन द्रव्ये तदा गुणप्रागभावयोः सम्बन्धः आद्यक्षणव्यवहारे कारणम्। क्षणप्रक्रियायां क्रिया, क्रियातो विभागः, विभागात्पूर्वसंयोगनाशः ततः उत्तरसंयोग इति क्रमानुसारेण लक्षणान्याह **उत्तरेति**।

## दिगधिकारः

दिशं लक्षयति **दूरत्वेत्यादि**। तादृशसंयोगस्यासाधारणहेतुत्वेनाव्याप्यवृत्तित्वेन च साधारण हेतुत्व-व्यापकत्वनिवेशादतिव्याप्तिवारणम्। दिक्-प्रत्यक्षत्वोपष्टम्भकप्राच्यादिभेदानाह **येति**। दूरत्व-संनिहितत्वहेतुभूताः ये संयुक्तसंयोगानामल्पत्वबहुत्वादयः संनिकर्षाः तेऽविभुनि न युज्यन्ते, विभुषु च आत्माकाशकालेष्वपि नोपपद्यन्त इत्याह **आत्मेत्यादि**। कालवद्दिगपि जगतः साधारणकारणं, तदाधारश्चेत्यत्र लौकिकवैदिकसार्वजनीनप्रतीतिमाह **इहेदानीमित्यादि**।

कर्णशष्कुल्यवच्छिन्ननभः श्रोत्रेन्द्रियमिति तार्किकाः, परं श्रुत्यवष्टम्भेन न तद्युज्यत इत्याह **कर्णेत्यादि**।

आकाशः कालदिगीश्वरात्मकः, ये कालिकाः व्यवहाराः ज्येष्ठत्वकनिष्ठत्वादयः, ये च दूरत्व-संनिहितत्वादयो दिगधिष्ठिताः, ते सर्वे आकाशेनैव सिध्येयुः। घटसंयुक्तः आकाशः तत्संयुक्तः सूर्यः तत्र समवेता क्रियेति संयुक्तसंयुक्तसमवायप्रत्यासक्तिः, दूरस्थसंयुक्तः आकाशः तत्संयोगः समीपगेनेति सयुक्तत्वसंयोगप्रत्यासक्तिः तदुपनायकत्वेनाकाश एव लाघवात्प्रत्यायक इति नव्यमतम्। आहुरित्यस्वरसः। ईश्वरश्चेतनः, आकाशश्चाक्षुषप्रत्यक्षः, दिक्कालौ षडिन्द्रियग्राह्यौ इति वैषम्यान्न नैतन्मतं युक्तम्।

## आत्माधिकारः

आत्मानं लक्षयति—**मूर्तावृत्तीति**। पृथिव्यादिवारणाय मूर्तावृत्तीति विशेषणम्। गगनेऽति-व्याप्तिवारणाय **जातीति**। जीवात्मनामनेकत्वात्तत्रात्मत्वजातिर्नेश्वरे। मनसि अतिव्याप्तिवारणाय विशेष्यम्। चतुर्थे प्रत्यक्षेति मानसाभिप्रायकम्। षष्ठे ज्ञानानधिकरणा जातिः पृथिवीत्वादिः। आत्म-त्वजातौ प्रमाणमाह **इयमिति**। ईश्वरो यदि सुखदुःखादिसमवायी स्याद्वेषादेरपि समवायी स्यादित्याह **द्वेषाद्यापत्तेश्चेति**। कार्यमात्रे अदृष्टं कारणं ईश्वरे तदभावान्न द्वेष इति चेदाह **तस्येति**। ईश्वरस्य कर्मविरहान्नादृष्टमन्यथा तस्यापि कर्मग्रस्तत्वप्रसङ्गः।

ननु कार्यमात्रेऽदृष्टं कारणमस्तु, मा वा; सुखदुःखानुभवस्तु अदृष्टाधीन एवेति सार्वजनीनम्। न निष्प्रमाणकः कार्यत्वावच्छिन्नाभावे तत्तत्कृत्यभावकूटस्य प्रयोजकत्वकल्पने गौरवात् कृतित्वावच्छिन्ना-भावस्यैकस्य प्रयोजकत्वे लाघवात् 'यद्विशेषयोः' इति सामान्यनियमश्च श्लोके प्रवृत्तिदर्शनादवश्यमङ्गी-कर्तव्य इति चेदाह **न त्वलौकिक इति**। सिद्धान्तेऽङ्गीकृतं आत्मनः कर्तृत्वं विवृणोति **उपादानेति**। कार्यमात्रे कृतित्वेनोन्वयव्यतिरेकाभ्यां ज्ञानत्वेनेच्छात्वेन च हेतुत्वं स्वीक्रियते क्रमेण, न तु तत्त्रितयजन्य-त्वमेकं युगपत् तत्र कारणमाह **आत्मेति**। शरीरक्रियामात्राश्रयत्वं कर्तृत्वमित्यङ्गीकारे दोषमाह **तस्मिन्निति**। इच्छाजन्यप्रयत्नाभावस्पष्टीकरणायाह **अन्योद्देश्यकेति**। मानसिकोद्देश्याभावेन धर्मशास्त्रे विहितं प्रायश्चित्तं न संपूर्णम् तथापि हत्यायां न न्यूनतेति हेतोः परेषां मतमाह **मुख्यमेवेति**।

भोक्तृत्वमात्मनो विवेचयति **लक्षणत्रयेण भोगसमवाय इति**। अनुकूलप्रतिकूलसंवेदनात्मक-सुखदुःखयोरन्यतरसाक्षात्कारः। स च घटादिज्ञानवदुत्तरक्षणवेद्योऽपि तु उत्पत्तिकाल एव सिद्धसामग्रीकत्वात्। तदेव विवृणोति **सुखदुःखयोर्हीति**।

देहेन्द्रियात्मवादिचार्वाकमतं सप्रमाणं विवेचयति **चार्वाकास्तु इति**। अनुमानेन पार्थिवत्वमचेतनत्वव्यभिचारि अचेतनत्वव्यापकभूतान्तरासमुच्चितत्वव्यभिचारित्वात् संमतवदित्यतः शरीरस्य चेतनत्वसिद्धिः, प्रतीतेश्च। देहाद्यभिमानशून्यमुक्तात्मवत् मृतशरीरे आत्मनो न च चैतन्यप्रतीतिरिति भावः। तन्मतमपाकरोति **तत्तु इति** 'भस्मीभूतस्य देहस्य पुनरागमनं कुत' इति न्यायेन देहस्यानित्यत्वात् अनित्यत्वञ्च पारलौकिकस्वर्गादिफलार्थं अग्निहोत्रादिबोधकवेदशास्त्रव्यर्थत्वप्रसङ्गः सद्योजातबालकस्य स्तन्यपानं ममेष्टसाधनमिति बोधाभावेन तत्पानप्रवृत्तिर्नोपपद्येत। अत्र जीवनादृष्टमेवोद्बोधकं अन्यत्र न तथा किमपि तदन्यबाह्येन्द्रियादीनां आन्तरिकसुखादिव्यवस्थाकारकत्वं न युज्यते।

ईश्वराङ्गीकर्तृलोकयतिकैकदेशियवनाचार्यमतेनोपपत्तिमाह **यत्तु इति**। ईश्वर एव बालकप्रवृत्तिजनकः नादृष्टादि कल्पना युक्तेति मतं नोपपन्नम्। ईश्वरः स्वेच्छया व्यवस्थाजनकश्चेत् तस्य वैषम्यनैर्घृण्यदोषप्रसक्तिः, इच्छायाः जीवनादिगतकर्मसापेक्षत्वे तु पूर्वोक्तादृष्टकल्पनयैवोपपत्तिः। एवं देहात्मवादं निरस्येन्द्रियात्मवादं प्रत्याचक्षते **इन्द्रियाणामिति**। अनुभवितुः चक्षुरादेः। एतत्सामानाधिकरण्यं अनादौ संसारे तेषामात्मनामप्यनादितया सिध्यति। अनादेः प्रागभावस्य नाशेऽपि तादृशभावस्य न नाशः, न च तन्नाशकः कोऽपि। प्रत्यभिज्ञायमानानुभवस्य भ्रान्तित्वं च न युज्यते, प्रमाणविरहात्। एतद्दोषपरिहारायाविनाशिमनसः आत्मत्वं मन्यमानश्चार्वाकैकदेशी प्रत्यवतिष्ठते **मन एवेति**। तन्मतं खण्डयति **सुखेति**। अणोर्मनसः सुखाद्याश्रयत्वे इति शेषः। अप्रत्यक्षत्वे हेतुमाह **आश्रयेति**। योग्यवर्तित्वस्य प्रत्यक्षार्हनिष्ठस्य। आत्मनोऽणुत्वे दोषान्प्रकटीकृत्य विभुत्वं साधयति **एतेनेति**। अनन्त संयोग-क्रिया-नाशादिकल्पने गौरवम् तत्परिहाराय शरीरमात्रपरिमाणकात्मस्वीकारे आह **मध्यमेति**। हस्तिपिपीलिकादिशरीरकस्यात्मनः संकोचविकासप्रसङ्गश्च। सिद्धान्ते मनस आत्मवद्विभुत्वेन चेतनत्वेन चात्मसिद्धिरभीष्टा सिध्यति। मनोभेदश्चाग्रे सेत्स्यति।

विज्ञानवादिबौद्धमतेनात्मस्वरूपमाह प्रवाहिविज्ञानमेवात्मा, तस्य स्वप्रकाशत्वं तेनेन्द्रियाजन्यत्वं, ज्ञानसुखादिकं तु तस्यैवाकारविशेषः। 'यत्सत्तत्क्षणिकं यथा जलधरः' इति व्याप्त्यनुसारेण पूर्वक्षणीयविज्ञानस्यानुभवितुरुत्तरक्षणेऽभावात्स्मृत्यनुपपत्तिरिति चेन्न; मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजसंस्कारसंक्रमेणोत्तरोत्तरविज्ञाने स्मृत्युपपत्तिः। सुषुप्तावालयविज्ञानधाराऽखण्डितैवेति खण्डयति **तन्नेति**। तस्य यत्किंचिद्विषयकत्वे विनिगमनाविरहः। जगद्विषयकत्वे सार्वज्ञ्यापत्तिः ज्ञानस्य सविषयकत्वनियमात्सुषुप्तौ विषयावभासप्रसङ्गश्च। तत्र निर्विषयकत्वे घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टापत्तिः, घटादेरनुभूयमानस्यापलपितुमशक्यत्वात्। समूहालम्बने नीलाकारोऽपि पीताकारः स्यात्स्वरूपतो विज्ञानस्याविशेषात्, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्। अनीलव्यावृत्तिरूपापोहः नीलत्वादिरिति चेदाह **एकस्मिन्निति**। न चोत्तरस्मिन्नुत्पत्तिरेव संक्रमः, उत्पादकविरहात्, चितामेवोत्पादकत्वे संस्कारानन्त्यप्रसङ्गः। तादृशभङ्गुरशरीररूपात्मवादे दोषमतिदिशति **अनेनेति**।

अधुनोपनिषदधिष्ठिताद्वैतवेदान्तिमतमाह **यत्तु इति**। अविनाशिसुखज्ञानरूप एवात्मा, स च परमार्थतः सकलप्राणिशरीरेष्वभिन्नः परमात्मनोपि नातिरिच्यत इति वचनानुसारेणैव सिध्यतीति चेन्न;

तज्ज्ञानं यत्किंचिद्गोचरं, सर्वविषयमविषयं वा ? नाद्यौ, दत्तोत्तरत्वात् । अन्त्ये आह **निर्विषयस्येति** । सार्वज्ञ्यापत्तिरिष्टापत्तिरेव 'यः सर्वज्ञ' इति श्रुतेरिति चेदाह **अनुभवविरोध इति** । श्रुतिवचनान्यपि न ज्ञानरूपात्मप्रतिपादकानि इत्याह **विज्ञानमिति** । सत्यं ज्ञानमिति ब्रह्मपरं जीवे तु नोपयुज्यते, ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः अन्यथा बन्धमोक्षव्यवस्थानुपपत्तेः । 'स्यादानन्दथुरानन्द' इति कोशादानन्दशब्दस्य नित्यपुंल्लिङ्गत्वादानन्दपदं अगत्या मत्वर्थीयाच्प्रत्ययान्तं, तेनानन्दवदित्यर्थः । अत एव न तच्छान्दसं मन्तव्यम् । दुःखाभावे सुखोपचारवत्तत्रानन्दाभावेऽपि गौवानन्द इति तार्किकमतमपाकरोति **यत्तु इति** । 'एकमेवाद्वितीयं ब्रह्म' इति जीवात्मपरमात्मनोरभेद श्रुतिः स्तुत्यर्था । तेनाहं सुखी, पचामीतिवद्भेदव्यवहारः संगच्छते । मुक्त्यवस्थायामपि भेदस्तथैव तिष्ठतीति सप्रमाणमाह **मुक्ताविति** । भेदगर्भसाम्यबोधनादित्यर्थः ।

निराकरणाय सांख्यमतमुपन्यस्यति **सांख्यास्तु इति** । कर्तृत्व भोक्तृत्वयोर्न सामानाधिकरण्यं, प्रकृतिः कर्त्री, सा च तत्परिणामभूतान्तः करणबुद्धिरूपमहत्तत्त्वद्वारा जानाति सुखदुःखेच्छाद्वेषकृति धर्माधर्मान् जनयति । तत्र बुद्धेश्चैतन्यं नास्ति, तदन्यथाऽनुपपत्त्या प्रतिशरीरं भिन्नः नित्यः पद्मपलाशवन्निर्लेप श्चेतनः पुरुषः भोक्ता कल्प्यते । तस्य कर्तृत्व प्रकृतिपरिणामत्वात् अभेदाद्विकृत्या नाशप्रसङ्गः । बुद्धिपुरुषयोर्भेदाग्रहात् तस्य कर्तृत्वाभिमानस्तस्याश्च चेतनत्वम् । मुकुरे मुखोपरागवत् स्वच्छ बुद्धौ मदंशः पुरुषोपरागः अतात्त्विकः, इदमिति विषयोपरागः इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको दर्पणमलिनिमेव कर्तव्यमिति व्यापारांश इति बुद्धेस्त्रयोंशाः, तेषां परस्पर वास्तवो भेदः इत्याह **साचेति** । पुरुषबुद्धयोः अवास्तवः परिणामोऽहंकारः । ततः तन्मात्रभूतेन्द्रियाणि एवं मिलित्वा पंचविंशतितत्त्वान्याह **यथाहुः इति** । गीतायामपि अकर्तापि पुरुषः विमोहेन कर्तेति मनुते, वस्तुतः प्रकृतिरेव कर्त्रीत्युक्तं भगवतेत्याह **तथा चेति** । तन्मतं निरस्यति **तन्नेति** । विनिगमनाविरहात्—एकत्र पक्षपातिन्याः युक्तेरभावात् । अजापदेनोभयोरनादित्वं यत्पूर्वमुक्तं तन्महतोऽनित्यत्वे नोपपद्येत । महतोऽचेतनत्वे चेतनकार्यासंभवः । वचनद्वयस्य योग्यमर्थमाह **अजापदमिति** । कर्तृपुरुषशक्तिः कर्मानुकूला अनुरूपसकलकार्याणि सृजते । भूयो व्यासक्तः सन् तप्यति पुरुषः कृतकार्यां त्यक्त्वा मुच्यत इति भावः । गीतास्वपि अदृष्टाधीनत्वमज्ञात्वा पुरुषः तन्निरपेक्षः केवलोऽहं कर्तेति मन्यत इत्यर्थः ।

अधुना परमात्मविषयकसिद्धान्तमुपपादयति **परमात्मेति** । क्षित्यादिकं कर्त्रजन्यं शरीराजन्यत्वात्परमाणुवदिति सत्प्रतिपक्षेण, शरीरजन्यत्वोपाधिना व्याप्यत्वासिद्धया च व्यभिचारनिवर्तकतर्कशून्यत्वात् नानुमानेन सिद्धिः । श्रुत्या शरीर तच्च नित्यं सिध्येत् । एवं कर्तृत्वाधारशरीरव्यापारः, तदधिष्ठितः कर्मविधिः विप्रादीनां सिध्यति । न च कृत्यधीनं कर्तृत्वं, विप्रत्वादिकं चेतनोमात्रोपलक्षकमिति शङ्कयम्; तथा प्रतीत्यभावात्, प्रतीतेः चेतनोपहितदेहाश्रितत्वात् । स एव—तादृशदेहव्यापार एव । अन्वयव्यतिरेकाभ्यां प्रयोगाणां तथोपलभ्यमानत्वादित्याह **यतमानेऽपीति** । कार्यमात्रं प्रति कृतेरेवान्वयव्यतिरेकाभ्यां हेतुत्वेन तज्जनकज्ञानचिकीर्षयोस्तत्रान्यथासिध्याऽहेतुत्वं स्यादित्याह **व्यापारेति** । सिद्धान्ते सार्वज्ञ्यानभ्युपगमेनेश्वरस्य सर्वज्ञतां व्यवच्छिनत्ति **किंचेति** । ईश्वरस्य सर्वज्ञतां मन्यमानः स्वयं सर्वज्ञः अवश्यंभावी, तस्य तथात्वेन ज्ञातापि सर्वज्ञः एवमनवस्थापत्तिः, न ह्यसर्वज्ञेनेश्वरोऽन्यो वा सर्वज्ञ इति बोद्धुं शक्यम्; विशेषणज्ञानविरहात् इति भट्टसंमत्याऽऽह **यथोचुरिति** । परमाणुप्रत्यक्षज्ञानवत्त्वादेवेश्वरस्य सर्वज्ञत्व मन्यमानोऽनुमानेन साधयति **परमाणव इति** । प्रमेयत्वप्रत्यक्षत्वयोर्व्याप्तिनियमाभावात् अप्रयोजकत्वं; अन्यथा प्रत्यक्षमात्रैकगम्यत्वे । 'यः

सर्वज्ञ' इत्यादिश्रुतेर्नेश्वरस्य सर्वज्ञतायां तात्पर्यमित्याह य इति। उपासनायां गुणोपसंहारन्यायेनोपास्यस्य जगत्कर्तुः आकांक्षितगुणोपदेशे तस्य वचनस्य तात्पर्यम्। न स्वार्थे, अन्यथा प्रयोजनाभावात् अप्रामाण्यप्रसङ्गः स्यात्।

ननु केचित् सर्वज्ञाः ज्ञानलक्षणया सर्वं जानन्ति योगिनोऽप्यतीन्द्रियप्रत्यक्षास्तथापि ते किंचिज्ज्ञाः, ईश्वरस्तु सर्वगोचरप्रत्यक्षवेत्तृत्वात् अन्येभ्यो विशिष्यत इति चेदाह नेति। इन्द्रियजन्यत्वविषयमहत्त्वेत्यादि प्रत्यक्षसामग्र्या विरहेऽपि प्रत्यक्षज्ञानोत्पत्ती सामग्रीबाधः।

ननु जन्यप्रत्यक्षे सामग्री अपेक्षिता न नित्ये इति चेत्तत्राह इन्द्रियेति। प्रत्यक्षत्वव्यापकेन्द्रियजन्यत्वावच्छेदकत्वबाधः। जन्यव्यतिरिक्तप्रत्यक्षत्वे प्रमाणाभावात्। नित्यप्रत्यक्षे इन्द्रियजन्यतावच्छेदकत्वस्वीकारे नित्यचाक्षुषत्वापत्तिश्च।

'यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायेन पर्वतमहानसीयधूमवह्निदृष्टान्तेन लाधवात्कर्तृत्वकार्यत्वसामान्यधर्मावच्छेदेन कार्यकारणभावो यथा, तथा लघुधर्मविच्छेदेन ज्ञानेच्छाकृतीनामपि स्यात् जन्यत्वप्रवेशे गुरुधर्मोऽनवच्छेदकः, तत्त्वं तु इन्द्रियाश्रयत्वं सुखसाक्षात्कारावच्छेदकत्वं वा। अन्यथा शरीरप्रवेशेन जन्यत्वेऽनवच्छेदकत्वात् नित्यं शरीरं, विभुनि च स्पर्शस्यपि कल्पना स्यात् इत्याशयेन ईश्वरसिद्धिमपेक्षमाणानां मतमाह यदित्विति। विशेषकार्यकारणभावेनैव सिद्धौ न सामान्यापेक्षा, तत्र कारणापेक्षासत्त्वेऽपि न कर्त्रपेक्षा। सामान्यकार्यकारणभावाङ्गीकारेऽपि अपरोक्षज्ञानाश्रयत्वात्मत्वादिनैवास्तु नित्यज्ञानं निराश्रयमेवास्तु अपेक्षाभावात्, तेन नेश्वरः सिध्यतीति खण्डनतात्पर्यम्।

दीधितिकृन्मतेन कार्यत्वावच्छिन्नं प्रति कृतेर्हेतुत्वाभावेऽपि घटत्वाद्यवच्छिन्नं प्रति कृतेर्हेतुतया खण्डक्ष्माकर्तृत्वेन पूर्वं कृतेरावश्यकत्वेन तदाश्रयतयेश्वरसिद्धिमाहु स्तन्नेति खण्डयति। क्रियाश्रयत्वेनैव कर्तृत्वं उपपद्यते तत्र खण्डपट इव खण्डक्ष्माकर्तृत्वे कुविन्दवत् कुलालाद्येव कर्ता नेश्वरः। स एवायं पटो महान् जात इति प्रतीतेः, पट परिमाणमेव नष्टं न पटः, परिमाणान्तरमेवोत्पन्नं। अल्पपटो नष्ट इति प्रतीतेरुपपत्तिमाह शिखी इति। सा विशेषणध्वंसावगाहिनी विशिष्टध्वंसावगाहिनी वा भवतु न तु विशेष्यध्वंसविषयिणी।

क्षित्यंकुरादिकार्यं कर्तृजन्यं कार्यत्वाद्घटवत् इत्यनुमाने न पक्षतावच्छेदकहेत्वोरैक्यं, स्वरूप सम्बन्धविशेषरूपकार्यत्वस्य पक्षतावच्छेदकत्वात् प्रागभावप्रतियोगित्वरूपकार्यत्वस्यैव च हेतुत्वात्। साध्यं च स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वं एवं चैतादृशकृतिजन्यत्वमस्मदादावसंभवादीश्वरसिद्धिरिति केचिदाहु। तेन च तस्य सर्वज्ञत्वमपि सिध्यतीति चेत्तत्राह किं चेति।

ननु अलौकिकसामान्यविषयकज्ञानत्वप्रत्यासत्त्या सर्वगोचरं ज्ञानं यद्यप्यस्मदादीनामपि, तथापि तत्तद्धर्मप्रकारकं लौकिकं ज्ञानमीश्वरस्यातस्तस्य सर्वज्ञत्वमिति चेत्तत्राह-तन्न सर्वप्रकारकं मानाभावात्। तत्तत्प्रकारकज्ञानं ज्ञानव्यक्तिविशेषेण भिन्नं, न सा प्रकारतैकस्मिन् ज्ञाने। जगत्कार्यजनकोपादानगोचरज्ञानानामप्यनेकत्वापत्तिः सर्वज्ञत्वे।

वाचस्पतिमिश्रमतमुल्लिखति यत्तु इति। ज्ञाने नाव्यवस्था किन्तु तत्तत्कारणविशेषाधीनो विषयाणां नियमः। ईश्वरस्य नित्यज्ञाने तादृशनियमाभावान्नानेकत्वं न च विषयनियतत्वमित्याशयः।

मीमांसासिद्धान्तानुसारेण तन्मतमपाकरोति **एवमिति**। नित्यज्ञाने विषयव्यवस्थाभावे घटज्ञाने पटत्वप्रकारकतादिप्रसङ्गेन शुक्तिज्ञाने रजतत्वप्रकारतावत् 'इदं रजतं इतिवत् भ्रमोऽपीश्वरे स्यात्, ननु ईश्वरे दोषाभावेन, भ्रमस्य च दोषजन्यत्वेन तत्र न भ्रमशङ्केति चेत्तर्हि सप्रकारकत्वस्य ज्ञाने कारणविशेषायत्तत्वात्, तद्विरहितं नित्यज्ञानं न प्रमा नापि भ्रम इति निर्विकल्पकमेव स्यात्।

जन्यज्ञानं यद्विषयकं भवति तत्तादृशसामग्रीसत्त्व एव, सामग्र्यभावात्तत् तदन्यविषयकं न संभवति। नित्यस्य च जनकसामग्रीविरहेण नियतविषयाभावात्सर्वविषयत्वं, दोषविरहाच्च न भ्रमत्वमिति नव्यमतं दूषयति **तन्नेति**। विषयो न नियतोऽतः सर्वविषयत्वं तर्हि सामान्यलक्षणया चैत्रेणाऽर्थान्तरत्वम्। तत्र सर्वप्रकारकत्वमिति चेत्तत्र न प्रमाणम्।

आत्मनः सर्वज्ञत्वे मतान्तरमाह **यत्तु इति**। वस्तुतो व्यापकज्ञानरूप आत्मा, शरीरेन्द्रियैर्मर्यादितत्वात् तस्य ज्ञानमपि संकुचितं, मुक्तावस्थायां मर्यादापगमे स्वाभाविकसर्वज्ञानरूप एवेत्याशयः। तत्राह **मानाभाव इति**। मुक्तावस्थायां 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्र' विषयाणां विलयेन ज्ञाने विषयाभाव; संबन्धाभावस्तेन सुतरां न सर्वज्ञत्वसंभवः। स्वरूपसंबन्धेनैव ज्ञानवत्त्वान्नान्यसंबन्धापेक्षेति चेन्न; असंगस्य ज्ञानस्वरूपत्वे न मानं अतः केवलं श्रुत्या उपास्यत्वेनेश्वरः सिध्यति स च निर्गुणः। एतदेव भट्टपादसंमत्या दृढीकरोति **तथेति**। तात्पर्यकथनपूर्वकं ईश्वरप्रकरणमुपसंहरति **सर्वथेति**। व्योमशरीरस्य तस्य व्योमवन्नित्यत्वं, श्रुत्या जगत्कर्तृत्वादिशक्तिमत्त्वादिगुणवत्त्वस्वीकारेऽपि न क्षतिरिति।

## मनोऽधिकारः

मनो लक्षयति **विशेषेति**। आत्मादिवाराणाय विशेषणं, पृथिवी कालाकाशादिवारणाय **इन्द्रियमिति**। वेगत्वं जातिविशेषः प्रत्यक्षसिद्धः मूर्तमात्राधिकरणः ज्ञानासमवायिकारणं आत्ममनःसंयोगस्तदाधारवन्मनः आत्मनः सुखादि तद्गुणानां च मानसं प्रत्यक्षं, तत्करणत्वं मनसः। मनस्त्व जाती प्रमाणमाह **मनस्त्वजातेरिति**।

शास्त्रदीपिकाकार **पार्थसारथिमिश्रमतमुपन्यस्यति अत एवेति**। ज्ञानमात्रस्य प्रत्यक्षानुमानादिजन्यस्येन्द्रियजन्यत्वव्याप्तेः। मनः संयुक्तमेव चक्षुरादि चाक्षुषादिज्ञानजनकम्। यद्यपि युगपद्विषयैः संनिकर्षो ज्ञानेन्द्रियाणां, तथापि मनसोऽणुत्वात्क्रमेण मनःसंयोगो भवति क्रमेण च ज्ञानोत्पत्तिः। ननु शतावधानिनां युगपत्स्पर्शादयो गृहीता इत्यनुभवान्यथानुपपत्त्या न मनसोऽणुत्वमिति चेदाह **एककालीनेत्यादि**। वस्तुतः भ्रमोऽपि अभ्यासादिवशेन युगपज्ज्ञानमिति भावः। नृत्यदर्शनकालीनानुभवोऽपि मनसोऽणुत्वमेव प्रकटयतीत्याह **अत इति**। मनसो विभुत्वमतमुल्लिखति अनुमानेन **मनो विभु इति**। ननु क्रिया, क्रियातो विभाग इत्यादिक्रमेण संयोगोत्पत्तिर्भवति। मनसोऽपि विभुत्वे न कर्म न च संयोग इत्याक्षेपं परिहरति **अजस्येति**। न च संयोगार्थं कर्मापेक्षा, तादृशघटाकाशसंयोगे कर्माभावाद्व्यभिचारात्। इति मनसः विभुत्वमपास्य मध्यमपरिमाणं निरस्यति **तथेति**। 'संकोचविकासशालि तैजसं मनः इति औपनिषत्पक्षोऽपि अतिदेशेन निरस्त इत्याह **एवमिति**। जलूका कीटविशेषः एवं मनसोऽणुत्वे निश्चिते सोऽणुः पार्थिवो वा तेजसो वेत्यत्र मिश्रमतनिष्कर्षमाह **मिश्रास्तु इति**। मनसोऽतिचंचलत्वात्तेजसश्च झटित्यतिदूरगमनानुभवात्तैजसाणुरूपमेव तदिति निष्कर्षः।

सिद्धान्तमाह **नव्यास्तु इति** । अतएव अपरिमितत्वादेव मनस्त्वजातेः एकमात्रवृत्तित्वं व्यक्त्यभेदबाधकादेव न; किन्त्वनेकत्र वर्तमान मत एवात्मवत् **विभुमन इति** भट्टपादा आहुः **अनवच्छिन्नसद्भावमिति** । अनवच्छिन्नसद्भावं सर्वदा सर्वत्र चाखण्डिततत्वेन वर्तमानम् । यतः कार्यं सर्वत्रोपलभ्यतेऽतः कर्ता, करण च मनो विभु सिध्यति । तथापि युगपज्ज्ञानानुत्पत्त्या करणस्याणुत्वं चेत्कर्तु रपि स्यात् । ननु विभुत्वे सर्वदा कार्यापत्तिरिति चेन्न योग्येन्द्रियसंयोगाभावात् । शक्तिश्च न सर्वदा सर्वत्रापि तु कार्यफले दृष्टे शक्तिकल्पनेति फलबलकल्प्या, तेन नासंगतिः । दीर्घशष्कुलीभक्षणे मनसः सर्वगतत्वान्नित्यत्वाच्च न क्रमकल्पना । अणुत्वपक्षेऽपि युगपज्ज्ञानाभावेऽसंनिर्पेणान्येन्द्रियसंचार-निरोधेनोपपत्ति स्तथा शक्तिविशेषादेव युज्यते । ननु 'येनेन्द्रियेण यो गुणः गृह्यते तत्तज्जातीयगुण-वदि'ति व्याप्ति चेन्न; व्यभिचारात् तेन न मनः पांचभौतिकमिति ।

## शब्दाधिकारः

वेदोऽखिलो धर्ममूलं, स च वेदः वर्णात्मकः ध्वनिद्वारा व्यज्यते, अनादिपरम्परया सृष्टेः प्रारम्भतः स्वरोच्चारादिष्वविकृतो नैकविघ्नान्तरितोऽपि यैः गुरुशिष्यपरम्परया संरक्षितः कृतज्ञताभरेण तान्प्रणम्याधारभूतवर्णानां नित्यत्वं द्रव्यत्वं विभुत्वं सिद्धान्तसिद्धं साधयितुमिदं प्रकरणमारभ्यते । वर्णस्य नित्यत्वे प्रमाणमाह **सोऽयमिति** । पूर्वोच्चारितः सः, अयं चाधुनोक्तः यस्योभयावगाहिज्ञानेनैं-क्यानुभवात् नित्यत्वं सिध्यति । ननु गवर्णस्योत्पत्तिनाशविपयकं भ्रमद्वितयम् । तादृशोभय-कल्पनान उभयावगाहिगत्वजात्यवच्छिन्नगभेदाभावात्मिका प्रत्यभिज्ञैवैकाऽभ्युपगम्यताम् । तद्वृत्तित्वे इदंवृत्तित्वावच्छिन्नयोरभेदावगाहः सोऽयमिति । 'गकार' इत्यत्र गत्वजातेः अनवगाहात् गकारवृत्तित्वस्य चानवगाहात् सा भ्रमप्रत्यभिज्ञेति चेन्न; लाघवेन भ्रमद्वितयकल्पनाङ्गीकारात् । वीचितरंगन्यायेनोत्पन्ना-नन्तशब्देषु च चैत्रीयानुमानं अनन्तान्तरितत्वान्न भवति ।

ननु जन्यत्वाभावेऽपि प्रयोजकत्वादेव चैत्रानुमाने दूषणमाह **चैत्रशब्दमिति**। अपरिमित्वाद-नन्तत्वादेव च न तेपु जातिसंबन्धोऽपि । सिद्धान्ते ध्वनिनैव तदीयत्वानुमानं, तत्र ध्वनिपु कथमेक-जातिकल्पनासंभवः । ननु तथापि एकवर्णद्वितयप्रतीत्यनुसारेण फलमुखं गौरवमिति चेत्पंचाशद्वर्णेपु विभाजकवर्णत्वरूपधर्मकल्पनादोषः उपयोः समः । एवं वर्णस्य नित्यत्वं प्रसाध्य द्रव्यत्वं साधयति **वर्णो द्रव्यमिति** । वर्णो न क्वचिदाश्रितः तत्र गुणत्वकर्मत्वाद्यभावात् घटवत् । तेन निराश्रयत्वहेतुं प्रसाध्य प्रथमहेतुमाक्षिपति **न चेति** । वायौ गुणमात्रग्रहणं न द्रव्यत्वस्येति चेत्तर्हि घटादेरपि रूपस्पर्शमात्रे संनिकर्षोपयोगः स्यात् । आकाशगुणत्वे तु संनिकर्षो नोपपद्येत । शंखाद्यवच्छिन्नशब्दे न श्रोत्रसंनिकर्षः, तत्प्रयोजकश्च वायुरेव नाकाश इति नादस्य वायुगुणत्वमेव । ध्वनिस्त्वनित्यो वर्णाभिव्यञ्जकश्च ।

## स्फोटवादनिरासः

स्फोटवादि वैयाकरणमतमुपन्यस्यति—पदगतवर्णाः युगपन्न अर्थं द्योतयन्ति, क्रमेण चेत्स-मुचिता वैकल्पिका वा भवन्तु, तेषां आशुविनाशित्वान्नार्थबोधो भवत्यतः पदस्फोट एवाङ्गीकर्तव्य इति । तत्र प्रत्यवतिष्ठते **तन्नेति** । उच्चारणोत्तरं आशुविनाशिनां वर्णानां समुदायासंभवः । एकैकवर्ण-व्यञ्जकत्वेऽन्यवर्णवैयर्थ्यम् । अन्त्यवर्णस्य क्रमसंस्कारसचिवस्य व्यञ्जकत्वे दोपमाह **तेनैवेति** । स्फोटा-भावे वर्णमात्रैः पदप्रतीतावपि एतौ दोषौ समाविति चेन्न; संस्कारसहितसमूहालम्बनरूपानुपूर्वीयुत-वर्णविशेषैरेवोपपत्तेः किमन्तर्गडुना वर्ण-पद-वाक्यस्फोटैरिति ।

## तमोऽधिकारः

तमोलक्षणमाह **तमस्तु इति**। तेजःसंसर्गाभाव एतावन्मात्रे लक्षणे कृते अंधतमावतमसोर्भेदो न स्यात्, एकदीपनाशजन्यावतमसि च तमोधीर्न प्रतीयेताऽतः **यावत्तेजस इत्यादि विशेषणम्**। अभावग्रहे प्रतियोगिसत्त्वप्रसंजनप्रसंजितप्रतियोगिकत्वरूपा योग्यताऽपेक्षिता, तत्र प्रतियोगिसत्त्वस्य ज्ञानं अनुभवस्मृत्यन्यतररूपं तन्त्रं न तत्सान्निध्यम्। संसर्गाभाव इत्यत्र नञा सहोच्चारणादभावरूपं तत्। भावरूपविधिप्रत्ययज्ञेयमिति वैशेषिकमतम् अन्यस्थलीयं रजतमन्यथाख्यात्या शुक्तौ भासते, प्रतिबिम्बबुद्धौ च कण्ठस्थमुखं दर्पणस्थत्वेन च यथा प्रतिभात्येवं द्रव्याश्रयविनिर्मुक्तं रूपं पृथिवीं विहाय दोषसामर्थ्येन नीलमिति भातीत्यन्ये। तदनुसारेणैव वार्तिकाभिप्रायो वर्णनीय इत्याहुः **यत्तु इति**। तमसोऽभावत्वं निराकृत्य परिमाणकर्मयुते तद्भावेऽभावधर्माध्यासः न तु तद्वस्तुतोऽभावरूपम्। तन्मतमपाकरोति **तन्नेति**। रूपस्याश्रयशून्येस्येति शेषः तादृशस्य तमस्त्वे व्यवहारानुपपत्तिमाह **नीलमिति**।

'पृथिव्येव तम' इति **मिश्रमतमुल्लिखति मिश्राश्चेति**। तमो विरला पृथिव्येव यथा नीहारः विरलजलम् इतस्ततः प्रसरति, नीलप्रभावात् च प्रभा पार्थिवनीलमणिजन्या सर्वैरारोप्यते साऽपि पृथिव्येव तदुपपत्तिमाह पृथिव्यादिचतुष्टयं अस्फुटं तत्र तन्नानुमीयते। स्फुटं तु प्रसिद्धमेव। तमोरूपेण नीलमात्ररूपा क्रियाश्रिता भूरेव सर्वत्र व्याप्तापि तेजसाऽभिभूयते। यदा प्रकाशः पार्थवभागेन प्रतिबध्यते तदा साध्ययानाभिभूयते; 'तम आसीत्तमसा गूढमग्रे' इति श्रुतेः। तन्मतं निरस्यति **तदपि नेति**। तस्य गन्धाद्यभावादनुद्भूतादिकल्पने मानाभावाच्च न पार्थिवत्वं युज्यते। द्रव्यान्तरत्वमपि नोपपद्यते। अपार्थिवत्वं विस्तरेण विवेचयति **गुणेत्यादि**। पृथिव्यां सर्वत्र नीलपीतादिव्यक्तय एकैका एवेति सिद्धान्तं निरस्यति **जगतीति**। नीलरूपं पाकवत्यां पृथिव्यामेव नान्यत्र, तत् पृथिवीसमवायि इति निर्गन्धत्वहेतुना सत्प्रतिपक्षितम् अनूद्भूतत्वाङ्गीकारे आह **अन्तत इति**। प्रसिद्धद्रव्येषु न तमसोऽन्तर्भाव इत्याह **अत इति**।

ननु तर्हि तस्य द्रव्यत्वमेव न स्यादित्याशङ्कां निरस्यति **नीलमिति**। ननु नीलादिप्रतीतिः सार्वदिका भ्रान्तिः ब्रह्मणि जगदाभासवदिति चेन्न; अविद्यादोषजन्यो जगदाभासः ब्रह्मविद्यया शुकवामदेवादीनां निरस्तोऽतस्तस्य भ्रान्तित्वकथनं युज्यतेऽत्र तु नित्यायाः नीलप्रतीतेर्न क्वचिदपि निवर्तकं दृष्टमतो द्रव्यान्तरत्वं तस्येत्याहुः **नावनिरिति**।

ननु प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति, तथापि तस्य चाक्षुषत्वं न युज्यते, आलोकादिविरहितचक्षुर्ग्राह्यत्वेन सामग्रीशून्यत्वादित्यत्रोपपत्तिमाह **आलोकनिरपेक्षेत्यादि**। ननु षष्ठस्य ज्ञानेन्द्रियस्य कल्पना केवलमेकस्यास्य कृते न संगच्छते इति चेत्पक्षान्तरमाह **चाक्षुषमिति**। रूपग्रहे आलोकापेक्षासत्त्वेऽपि नीलरूपग्रहे न नियमः, व्यभिचारात्। ननु तथापि आधारभूतद्रव्याग्रहे कथं तद्गतरूपग्रह इत्यत्राह **संयुक्तेत्यादि**। संनिकर्षान्तर्गतस्य न ज्ञानमपेक्षितमिति भावः। तद्ग्रहाग्रहे च ग्रहः प्रकारभेदेन भवत्येव, तत्र यद्यप्यस्त्यालोकापेक्षा तथापि स प्रतिबन्धापसारकत्वरूपेणापेक्षितः न करणतयेति राद्धान्तः। किं चालोकसंयोगस्य चक्षुःसंयुक्तचाक्षुषत्वमेव कार्यतावच्छेदकमङ्गीकर्तव्यम्; चाक्षुषभावविशेष्यकप्रत्यक्षत्वे निर्विकल्पप्रत्यक्षे विशेष्यविशेषणविरहात् तत् विनाप्यालोकं स्यात्। तमःप्रत्यक्षे चाक्षुषत्वं नालोकसंयोगजन्यमतस्तद्व्यभिचारात्। आलोकसंयुक्तचाक्षुष एव आलोकसंयोगनियम इति चेत्तथापि आलोकाभावचाक्षुषाभावप्रसङ्गः स्यात्, अभावेन भावस्य विशेषणतासंनिकर्षात्।

भावत्वनिवेशे 'आलोको नालोकसंयुक्त' इति व्यभिचारः, गौरवं च किं च चाक्षुषे आलोकवदालोकाभावोऽपि कारणं अन्वयव्यतिरेकसाम्यात् निमीलितचक्षुषा ज्ञायमानतमस उपपत्तये एक शक्तिरूपकारणतैव च योग्या।

'तम आसीत्तमसा गूढमग्रे' इति श्रुत्या तमो नित्यम्। अनित्यत्वाङ्गीकारे च गौरवमाह **अनित्यत्व इति**। नित्यस्य तस्यामूर्तत्वे आत्मवन्नीरूपप्रसङ्गः। तथापि तस्य त्रुटिरूपत्वाङ्गीकारेण नातीन्द्रियत्वम्। आरम्भकत्वाभावान्न स्पर्शवत्त्वम् अविरललग्नास्त्रसरेण वाखण्डाः तमोरूपेण प्रतीयन्ते। महन्महत्तरादिधीरपि तादृशबहुतरतमादि त्रुटिकृता। तादृशशक्तिरेव परिमाणान्तरारम्भिकाऽखण्डस्य प्रत्यभिज्ञानात्, न संयोगस्तत्र कारणम् किन्तु समवायः। अवयवा एव दृढसंयोगैः स्थूलावयविरूपेण प्रतीयन्ते तेन द्वयाभावात्परिमाणवति परिमाणान्तरोपालम्भो न युज्यते। स्पर्शत्वमूर्तत्वयोर्न व्याप्तिसम्बन्धः मनसि च स्पर्शाभावेऽपि वैशेषिकैर्मूर्तत्वाङ्गीकारात्। मूर्तत्वं चात्र क्रियासमवायि कारणतावच्छेदकत्वं न परिच्छिन्नपरिमाणवत्वम्। स्पर्शो न क्रियाहेतुः क्वचिदपि। मूर्तत्वाङ्गीकारेण अमूर्तत्वान्नित्यत्वरूपत्वारूपत्वानुमानं बाधग्रस्तम्।

**इति श्रीपिंगले इत्युपनामकानन्तशास्त्रिकृतौ अर्कमाधुरीनामकभाट्टार्कव्याख्यायां द्रव्यनिरूपणम्॥**

---

## गुणाधिकारः

संख्यापृथक्त्वविभागपरत्वापरत्वधर्माधर्मशब्दसंस्काराः नव गुणाः सिद्धान्तेऽनङ्गीकृतत्वात्पञ्चदश गुणा इत्युक्तम्। पञ्चदशेति सावधारणं, तेन तदन्ये गुणा न सन्तीति ज्ञापितम्।

गुणं लक्षयति **कर्मभिन्न इति**। द्रव्यावृत्तीत्यनेन द्रव्येऽतिव्याप्तिर्वार्यते। जातिमान् इत्यनेन सामान्यादीनां वारणम्। असमवायीति व्यभिचारवारकत्वात् स्वरूपकथनं न लक्षणम्। अथवा संख्यावारणाय तत्। संख्यायाः गुणकर्मणोरपि वर्तमानत्वान्न गुणत्वं सिद्धान्तेऽतस्तद्वारणाय **संख्याभिन्नेति**। **सकलेति** विभुद्रव्यपरिग्रहाय, तेन कर्मण्यतिव्याप्तिवारणम्। तादृक् सत्ता व्याप्या। द्रव्यत्वव्यापकतावच्छेदकेति सकलद्रव्यद्योतकम्। 'उत्पत्तौ द्रव्यं क्षणमगुणं तिष्ठतीति' न्यायेन तत्र द्रव्ये न व्यापकत्वं गुणानामित्यसिद्धिपरिहारायाह **रूपादीति**। स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वेऽभावः प्रागभाव इति जरन्नैकयायिकमतम् नव्यनैयायिकास्तु अत्यन्ताभावस्यासमानाधिकरण्यं मन्वते, तेन व्यापकतालक्षणे प्रतियोगिवैयधिकरण्यमभावे देयम्। तेन च नाव्याप्तिरित्याह **अन्यथेति**। गुणत्वजातौ प्रमाणमाह **द्रव्यत्वेत्यादिना**। गुरुत्वं पारिमाण्डल्यपरिमाणं च न चाक्षुषप्रत्यक्षगम्यं किन्तु अनुमानेन बोध्यं, धर्मिग्राहकव्यवहारेण चक्षुषा च यथा वने न केवलं वृक्षत्वेनापि तु 'अयं शिंशपावृक्ष' इत्युपदेशसहितप्रत्यक्षेण शिंशपा गृह्यते। गुणपदशक्यतावच्छेदकतया गुणत्वजातिसिद्धिः अथवा रूपादीतरयावत्प्रतियोगिकभेदवत्त्वरूपान्यतमत्वेन तत्सिद्धिः। 'यद्विशेषयोः' इत्यादिव्याप्त्या गुणत्वरूपसामान्यधर्मपुरस्कारेण जातिसिद्धिरिति मतं दूषयति **तदपीति**। गुणपदशक्यतावच्छेदकत्वं न गुणत्वसाधकं, मानान्तरसिद्धत्वाभावादित्याह **मानान्तरेत्यादि**। तथात्वे पाशवाचकाक्ष-विभीतकफलादिवाचकाक्षशब्देषु शक्यतावच्छेदकं अक्षत्वं अनन्य स्यात्।

### रूपाधिकारः

रूपं लक्षयति **चक्षुर्मात्रग्राह्य इति**। स च चक्षुर्भिन्नाग्राह्यः। न च तथापि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यम्। चक्षुर्मात्रग्राह्यत्वस्य चक्षुर्मात्रगृहीतस्नेहविशेषेऽतिव्याप्त्यापत्त्या चक्षुर्मात्रग्राह्यत्वस्य जातिविशेषणत्वं स्वीकृत्य चक्षुर्मात्रग्राह्यजातिमद्गुणत्वविवक्षणं आवश्यक तेनैव प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणम्। प्रभात्वमादाय प्रभायामतिव्याप्तिवारणाय गुणपदम्। ननु कथं चित्रं रूपं नाभ्युपगम्यते? नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीरूपोऽप्रत्यक्षत्वप्रसङ्गात्। नापि व्याप्यवृत्ति नीलादिरूपमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात्। नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यतेऽनुभवात् इति चेन्नेत्याह **चित्रप्रतीतिस्तु इति**। नीलादीनां पीताद्यारम्भे प्रतिबन्धकल्पने गौरवात्। समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसंबन्धेन नीलातिरिक्तरूपत्वेन, पीतरूपं प्रति पीतातिरिक्तरूपत्वेन प्रतिबन्धकत्वमिति रीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनादन्यथा नानाजातीयरूपवत्कपालारब्धे घटे नीलकपालाद्यवच्छेदेन पीतोत्पादापत्तेर्दुर्वारत्वादिति भावः।

ननु चित्ररूपप्रतीतेर्विरोधान्न नानारूपकल्पनमिति चेदाह **एकेति**। विषयरूपस्य बहिर्द्रव्योपलम्भकत्वाभावे नीरूपाणां महतां वाय्वादीनामपि चाक्षुषप्रसङ्गः। ननु घट एव घटरूपं सर्वदा तयोः सामानाधिकरण्यप्रतीतेरिति चेन्नेत्याह **अन्धादीनामपीति**। रूपग्रहाभावे च घटाग्रहापत्तेश्च। सामानाधिकरण्योपपत्तिमाह **किंचेति**। ननु कोशप्रमाणेन गुणे गुणिनि चोभयत्र शक्तिरिति मतं निराकरोति **नागृहीतेति**। पक्षान्तवाचकदर्शपूर्णमासयोः निरूढलक्षणया तत्कालीनयागयोः प्रयोगः। यथा गोवत्से गोत्ववयोवस्था सामानाधिकरण्यं एकार्थसमवायेन तथाऽश्वत्वश्वेतगुणयोः 'श्वेतो धावती'त्यत्रोपलभ्यते। अत एव गुणिभिन्नः कर्कादिरत्र गुणो मत इति वार्तिकस्य संगतिः।

जगति एकमात्रनीलादिव्यक्तिवादिनां आचार्याणां मतमुपन्यस्यति **आचार्यास्तु इति**। नीलतरतमाद्युपपत्तिमाह **नीलतरेति**। तेन एकव्यक्तित्वेन तासां व्यक्तीनां नित्यत्वमुपपादयति **स एवेति**। नीलो नष्ट रक्तो जात इति नीलसमवायरक्तसमवाययोरुत्पत्तिविनाशविषयकोऽसौ प्रत्ययः प्रत्यभिज्ञाप्रत्ययस्य तज्जातीयविषयत्वं सैवेयं गुर्जरीतिवत् भ्रमविषयत्वात्। पाकस्याभिव्यञ्जनतारतम्यात् पाकवति अन्यत्र च रूपादीनां भेदप्रत्ययः, वस्तुतोऽनन्यत्वमेवेति भावः।

## रसाधिकारः

रसं निरूपयति **तत्रेति**। पृथिव्यां मधुराम्ललवणकटुकषायतिक्तभेदैः जले मधुरमात्रप्रकारेण वृत्तिः रसः। तन्मात्रोक्तौ द्रव्यत्वादिगृहीत्वातिव्याप्तिः स्यादत आह इति **तेजावृत्ति इति**। लघुलक्षणमाह **रसनेति**। मात्रपदकृत्यं रूपलक्षणोक्तं ज्ञातव्यम् तद्‌भेदानाह **स चेति**।

## गन्धाधिकारः

गन्धं लक्षयति **गन्धस्तु इति**। तत्प्रकारावाह **स इति**।

## स्पर्शाधिकारः

**स्पर्शं** निरूपयति **त्वगिति**। मात्रपदेन संख्यावारणम्। तत्प्रकारानाह **स त्रेधेति**। शीतो जले, उष्णस्तेजसि, अनुष्णाशीतो वायौ क्षितौ च। पीलुपाकवादिवैशेषिकमतं सविस्तरमुपपादयति **तार्किकास्तु इति**। ते खलु अपाकनिक्षिप्तस्य कुम्भादेः अग्निसंयुक्तस्य परम्परया कारणभूतेषु परमाणुषु अग्निसंयोगात्कर्मोत्पत्तौ मिथो विभागात् द्रव्यारम्भकसंयोगनाशाद्वा द्व्यणुकनाशे अणुषु औष्ण्यापेक्षादग्निसंयोगात् रूपनाशे सति, अग्निसंयोगान्तरात्तथाविधादपूर्वरूपाद्युत्पत्तौ अदृष्टोपलब्धात्माणुसंयोगात् अणुषु कर्मोत्पत्तौ, तेषां परस्परसंयोगात् द्व्यणुकाद्युत्पत्तिद्वारा तेषु कारणगुणपूर्वकतया रूपादि उत्पद्यते-इति कल्पयन्ति। तेषु प्राचीनरूपादिनाशेऽनुमानं प्रमाणं तथाहि—"पार्थिवपरमाणुरूपादयो विनाशिनः पार्थिवविशेषगुणत्वात् घटरूपवत्" इति। तत्र द्व्यणुकनाशमारभ्य रूपान्तरोत्पत्तिः क्रमशः नवभिः क्षणैर्भवतीति तत्प्रक्रिया। तत्र क्रियावति क्रियान्तरं सप्तमेऽष्टमे चाद्यापि रक्तोत्पत्त्यभावान्निर्गुणे च क्रिया नोत्पद्यते। यद्यपि क्रियावति परमाणौ न क्रिया तथापि द्व्यणुकान्तर्गतान्यपरमाणुगतक्रियासंभवः तेन अष्टसप्तमषष्ठपंचमक्षणप्रक्रियाः कल्प्यन्ते।

पिठरपाकवादिनैयायिकाभिप्रायं विवेचयति **नैयायिकास्तु इति**। अवयविनां साच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तः प्रविष्टैरवयवेष्ववयविनोपष्टब्धेष्वपि पाको न विरुध्यते। ननु घटाद्यन्तर्गताश्मभस्मीभावदर्शनेन तदाधारभूतोऽवयव्यपि नश्यतीत्यङ्गीकर्तव्यमिति चेन्नेत्याह **वह्न्यौषधसंयोगस्येति**। आश्रयोपहितवह्निसंयोगजनितो भस्मीभाव इत्यर्थः यत्र तु न प्रत्यभिज्ञा तत्रावयविनोऽपि स्वीक्रियत इति।

## परिमाणाधिकारः

परिमाणं लक्षयति **परिमितेति** । संख्यायामतिव्याप्तिवारणायासाधारणमिति विशेषणम् परिमाणत्वजातौ प्रमाणमाह **अनुगतेति** । प्रत्यक्षमेव प्रमाणमित्यर्थः ।

ननु परमाणुद्व्यणुकद्रव्ये परिमाणयुते द्रव्यत्वात् घटवत् इत्यनुमानमेव तत्र मानमिति चेदाह **द्रव्ये इति** । अप्रयोजकत्वं विशदयति तस्य द्रव्यत्वस्य । एतत्-पारिमाण्डल्यपरममहत्परिमाणं । परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात् द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणम् । द्व्यणुकस्याणुपरिमाणं परमाण्वणुत्वापेक्षया नोत्कृष्टं, त्रसरेणुपरिमाणं न सजातीयमत आह **अत्यपकृष्टेति** । अत्र त्रुटिपरिमाणं ततोऽपकृष्टपरिमाणजनितमिति सिद्धान्तः, न वैशेषिकवत् द्वित्वत्रित्वसंख्याजन्यमिति विशेषः ।

ननु तदपकृष्टपरिमाणं अवश्यं नित्यमित्यङ्गीकर्तव्यं, नो चेदनवस्थाप्रसङ्गः अत एव च नित्यत्वान्न तज्जनक आकाशपरिमाणवदित्याशङ्कां परिहरति **चेन्नेनि** । नित्यपरिमाणमजनकमिति न व्याप्तिरित्यर्थः । दृष्टान्तासिद्धान्तमाह **वस्तुतस्तु इति** । परममहत्परिमाणानङ्गीकारादिति शेषः । अपकृष्टपरिमाणस्यापेक्षाबुध्यत्वलम्बितत्वान्न निश्चितत्वम् नित्यत्वं वा । तदेव विशदयति **आमलकादिषु इति** । यथाऽपकर्षस्तथा अतिमहत्त्वमपि प्रात्यक्षिकमेव परिमाणम् । भूमण्डलसागरादावेव मर्यादितं तेनावकाशरूपशून्याकाशे न परममहत्परिमाणम् । प्रतीत्यनुसारेण दीर्घत्वमहत्त्वे द्वे परिमाणे इत्याह **इदमिति** । त्रुटिभिन्नं घटादिपरिमाणं कपालगतमहत्परिमाणतः संख्यातश्च जायते । प्रचयजन्यं परिमाणमाह **चैत्रादिति** । ननु पूर्वपरिमाणनाशाभावेऽन्यपरिमाणासम्भवः अत आह **परिमाण एवेति** । परिमाणान्तरजनने न प्रतिबन्ध इत्यर्थः । पूर्वपरिमाणनाशेऽपि देहस्य न नाशः, अन्यथा प्रत्यभिज्ञा न स्यात् य एव बाल आसीत् स अधुना युवा जात इति । तस्य शास्त्रीयदृष्टचोपयोगमाह **अत एवेति** ।

## संयोगाधिकारः

**संयोगलक्षणमाह द्रव्येति** । तत्र प्रमाणं दर्शयति **घटेति** । ननु नित्यसंयोगस्य कथं प्रत्यक्षत्वं विभ्वोरजयोस्तदसंभव इति चेदाह **कल्प्य इति** । अनुमेय इत्यर्थः अन्यथा आत्ममनसोरजयोः संयोगाभावे आत्मप्रत्यक्षं मानस नानुभूयेत । कर्णशष्कुल्यवच्छिन्ना दिक् श्रोत्रम् । तेन शब्दग्रहणे व्यापकाजदिग्वर्णयोः संयोग एवासमवायिकारणं, तदभावे वर्णसाक्षात्कारो नोपपद्येत । ननु कम्बुग्रीवादिमत्त्वापेक्षया घटत्वमिव अन्यतरकर्मत्वापेक्षया कर्मत्वमेव कारणतावच्छेदकमस्तु, गुरुधर्मस्य अनवच्छेदकत्वादिति । किं च दण्डादौ कर्माभावेऽप्यन्तरत्वेन संयोगत्व स्यादत आह **काकेति** । केवलकाक एव समवायी न वृक्षस्तत्र संयोगश्च वृत्तः न वर्तमानः तदा सयोगे कर्माभावाद्व्यभिचार प्रसक्त इत्याशयः । मेषसंयोगे कदाचिदाधाराधेयभावोऽपि भवति तदा प्रतियोग्यनुयोगित्वे वर्तमानेऽपि न सम्बन्धत्वं तयोः, समवायेनैवोभय कर्मजसंयोगरूपकार्योपपत्तेः । तत्र तरुकाकसयोगे । तौ अन्यतरकर्मजोभयकर्मजसंयोगौ । उभयकर्मजसंयोगस्थलेऽन्यतरकर्मणोऽपि सत्त्वात् अन्यतरकर्मजानन्तव्यक्तिभेदकूटकल्पनागौरवापेक्षया जातिकल्पने लाघवमिति भावः । तत्र उभयकर्मजसंयोगस्थलेऽन्यतरकर्मजसंयोगद्वयापत्तिः ।

**पार्थसारथिमिश्रमतं** परावर्तुमुपन्यस्यति **यत्तु इति** । नैरन्तर्यप्रयुक्तः द्वयोर्मध्येऽन्तराभावजनितः । आद्ये एककालवृत्तित्वपक्षे । अथ नैरन्तर्यं न एकसमयावच्छेदेन वर्तमानत्वमपि तु तज्जन्यत्वमिति

चेदाह **तथापीति** । अन्त्ये एकदेशवृत्तित्वपक्षे । देशद्वयस्य नैकट्यं शरादिकर्मजन्यमित्यस्मन्मतप्रवेशः । अजयोर्नित्यः संयोग इति सिद्धान्तः ।

**मिश्रास्तु** तस्य जन्यत्वं मन्यन्ते, तन्मतं विकल्पपूर्वकं दूषयति स **किमिति** । अजद्वयरूपसमवायिनोः सामग्रीसत्त्वे उत्पत्तेर्विलम्बाभावः, पूर्वसंयोगनाशाभावे कथं संयोगान्तरसंभवश्चेज्जन्यभावत्वादेव तन्नाशोऽवश्यंभावी । जनकसामग्रीसत्त्वेऽपि नाशसामग्र्याभावस्तर्हि अनादित्वान्नित्य एवास्तु न जन्यः स संयोगः ।

ननु अनेके संयोगाः, सुषुप्तौ नाशोत्तरं पुनर्जायन्तेऽत एव तदा न ज्ञानमिति चेन्न, तदा त्वगादीन्द्रियमनोयोगरूपज्ञानजनकसामग्र्यभावादेव न ज्ञानं, संयोगादिना । ईदृशसंयोगनाशादिकल्पनातः, अजयोर्व्यापकत्वान्नित्यत्वमेव तत्संयोगस्योपपद्यते । अनेकतः ऐक्याभावात् ।

व्यापकदिग्वर्णसंयोगं विना शब्दग्रहणासंभवात्तत्संयोगोऽवश्यं कल्प्यः । स च नित्य एक इति चेत्सर्वदा शब्दश्रवणं स्यात् इति चेन्न; सर्वदा वर्णानभिव्यक्तेः ध्वनिरेव वर्णव्यञ्जकः स च वायुगुणः । इतरेषां आकाशात्मादीनामजानां संयोगे न किमपि प्रमाणम् । संयोगो न द्विष्ठ इति मिश्रमत निरस्यति **यदपीति** । सादृश्यं सर्वदाऽनुयोगिनि एकमात्रे न प्रतियोगिनि, चन्द्रप्रतियोगिकसादृश्यं मुख एव न चन्द्रे यथा, तथा संयोगोऽपि प्रत्येकमेकैकनिष्ठ एव । नैकनिष्ठोऽपि स्वनिरूप्यनिरुपकभावः, स्वस्मिन् अप्रतीतेः । तत्राह **तदपि नेति** । निरूप्यनिरूपकयोरुभयोः सम्बन्धी अपि संयोग एक एव प्रत्यक्षप्रतीतेः । तद्भेदे च योगसिद्धिनयविरोधः स्यात् अत एकया संयोगसामग्र्या एक एव संयोगो जन्यते न निरूप्यनिरूपकभेदेन द्वौ । ननु समवायिकारणसामग्रीभेदात्कार्यभेद इति चेन्न सामग्रीभेदाभावात् । सामग्रीं निर्वक्ति **सामग्री तु इति** । क्षण इत्यनन्तरं अव्यवहितपूर्व इति देयम् । सादृश्ये द्वे, संयोगस्तु एक एव सन्द्वयोरास्ते । इति सिद्धान्तं स्पष्टयति **सादृश्यंत्विति** । ननु संयोगस्य एकत्वे एकस्मिन्घटे घटसंयोगप्रतीतिः स्यात्सा बाधिकाऽतः सादृश्यवद्वौ स्यातामिति चेन्न तस्याः प्रतीतेः घटनिष्ठप्रतियोगिताविशिष्ट संयोगस्य घटेऽभाव एव तात्पर्यम् । ननु द्वित्ववद्व्यासज्यवृत्ति द्विष्ठत्वं, सयोग एकोऽपि पर्याप्तिसंबन्धेनोभयत्र वर्तत इति केचित् वदन्ति तन्मतं दूषयति **घटे इति** । अनुकूलतर्काभावादप्रयोजकमित्यर्थः । समूहालम्बननिबन्धनानानाप्रकारतानिरूपितनानामुख्यविशेष्यताशालिसंयोगज्ञानजनिता । व्यासक्तत्वाभावे द्विष्ठत्वं किमिति शङ्कायां तन्निर्वक्ति **द्विष्ठत्वमिति** । स्वं संयोगः ।

संयोगो न व्याप्यवृत्तिः, तथात्वे निर्दिष्टप्रतीतिविरोधः स्यात् । ननु संयोगस्याश्रयोऽन्यः तदभावस्य चान्यः, तेन तस्य व्याप्यवृत्तित्वमेवेति चेदाह **द्वयोरपीति** । अबाधितप्रतीतिबलान्न भ्रमत्वशङ्का, विरोधाभावे किंचिदवयवावच्छेदेन तदाश्रितत्वनिरूपणेऽपि अव्याप्यवृत्तित्वमेव । अव्याप्यवृत्तित्वं परिष्करोति **स्वसमानाधिकरणेति** । स्वसमानाधिकरणं एतद्वृक्षः तद्वृत्तिः अनवच्छेदेनात्यन्ताभावः तत्प्रतियोगित्वं संयोगस्येति समन्वयः । संयोगश्चेति । गुणारम्भे संयोगजसंयोगादौ निरपेक्ष एवासमवायि । निष्क्रियद्रव्यनाशे इत्यनन्तरं संयोगनाश इति बोध्यम् ।

## गुरुत्वाधिकारः

**गुरुत्वस्य** लक्षणप्रमाणे निरूपयति **गुरुत्वमिति** । त्वक्प्रत्यक्षमपि देहाधःतिर्यग्भागे स्पर्शो न गुरुत्वप्रत्यायकः उपरिस्थभाग एव तदग्राहक इति सदृष्टान्तं स्पष्टयति **चक्षुरिति** । अनुमानमपि तत्र

प्रमाणमाह **गुर्विति**। आद्यपतनासमवायिकारणत्वेन न गुरुत्वं सिध्यतीति केषांचिन्मतमाह—अग्नेरूर्ध्वगमनं, वायोश्च तिर्यग्गमनं यथाऽदृष्टवदात्मसंयोगेन भवति तथा पतनमपि। संयोगस्य कादाचित्कत्वात् यावदाश्रयं स्थैर्यं न स्यात् इति चेन्न; संयोगजन्यत्रुटिकर्मणः स्थिरत्वात्। अनुमानेनापि न तत्सिद्धिरित्याह **न चेति**। एकवृत्ति इत्यनेनैव संयोगवारणान्मात्रपदनिवेशे गौरवम्। मात्रपदेन वेगातिव्याप्तिवारणमिति चेन्न; गुणपदेनैव तद्वारणात् वेगस्य गुणत्वानङ्गीकरणात्। ऊर्ध्वगमनादेरपि तथैव गुणान्तरजन्यत्वप्रसंगाच्च। गमनस्य कर्मत्वजात्यैवोपपत्तेर्न गुणान्तरप्रसङ्गो न वादृष्टकल्पना तर्हि असमवायिकारणपर्यन्तगमनापेक्षया समवायिनिष्ठजात्यैव पतनोपपत्तिः, तेनैव चोर्ध्वगमनादिसङ्गतिरिति तु प्रत्यक्षप्रमाणादेव निरस्तं वेदितव्यम्।

गुरुत्वं त्रुटावेवावयवे नावयविनि; द्विवहुत्रुटिगतगुरुत्वैरधिकाधिकमत्यनुपलब्धिः गुरुत्वसंख्याधिक्ये न गुणाधिक्यं, तथा सति हेमखण्डद्वयकृते कटकेऽधिकपरिमाणं स्यात्। खण्डनाशे गुरुत्वनाशकल्पना गौरवावहा। कार्ये कारणानुवृत्त्याऽवयविनि गुरुत्वाधिक्योपलम्भ आवश्यक इति चेन्न; कारणेन कार्यापादनानुपपत्तेः। न चात्र तृणवदतिनिकृष्टगुरुत्वम्। कार्ये कारणगुणानुवृत्तिनियमो न सार्वत्रिकः इत्यत्र सदृष्टान्तं प्रतीतिरेव प्रमाणमित्याह **अत एवेति**। तत्र गन्धाभाव-रसाभावान्नावयविनि गुरुत्वं, प्रतीतिस्तु अवयवद्वारैवोपपद्यते। तत्रापवादमाह **रूपे इति**। अपवादमसहमानाः केचित्पटं नीरूपमेव कल्पयन्ति, तत्रोपपत्तिमाह **परेति** सुवर्णस्य तादृशपटस्य च नीरूपत्वेऽपि सहकारिरूपेणैव ग्रहणसंभवः। ननु तथापि प्रतीत्यपलापो न युक्तः; उभयसाधारणरूपवत्त्वमेव चाक्षुषत्वे तन्त्रमिति चेदाह—अभिभवेऽवयविरूपकारणशक्तेर्नाशान्न चाक्षुषत्वसंभवः। ननु गुरुत्वं लघुत्वाभाव एव। तेजसः अत्यन्तसूक्ष्मपक्षिणां चरणेषु तथा कार्पासांशेषु ऊर्ध्वगतिदृष्टेर्लघुत्वमेव गुण इति चेदाह **गुरुत्वादिवदिति**। ऊर्ध्वगतेरुपपत्तिमाह **ऊर्ध्वगतिस्तु इति**। रत्नतुलायाः सूक्ष्मायाः कंटकानामवनतेः प्रत्यक्षत्वात् तत्र गुरुत्वमेव सिध्यति। अभिघातः शब्दहेतुः संयोगविशेषः।

## द्रवत्वाधिकारः

स्यन्दनासमवायि, संग्रहे च निमित्तकारणं **द्रवत्वम्** तत्प्रकारावाह **द्वेधेति**। ननु हिमकरकयोः न सांसिद्धिकद्रवत्वमाप्ययोरतः यदुक्तं जलमात्रे आद्यमिति तन्न; ते पार्थिवे, घृतजतुप्रभृतिवत् भौमोष्मसंयोगजद्रवत्वकठिनसंयोगवत्त्वाभ्याम् इत्यनुमानेनेत्यपि न सिध्यति। अनुष्णाशीतस्पर्शवत्त्वोपाधिमत्त्वात्सत्प्रतिपक्षितत्वाच्च। यद्यप्ययमुपाधिः न साधनाव्यापकस्तथापि यदभावप्रयुक्तः पक्षे साध्यसाधनसंवन्धाभावस्स तत्र उपाधि'रिति तल्लक्षणस्य सत्त्वात्। लवणमपि अग्निसंयोगप्रतिवध्यद्रवत्वादाप्यमिति चेदाह **तत्त्वप्रयोजकमिति**। क्षारैकरसवत्त्वान्नैमित्तिक द्रवत्ववत्त्वाच्च लवणं पार्थिवमेव। तयोः अग्निसंयोगजन्यत्व-तत्प्रतिवध्यत्वेऽनुकूलतर्कशून्ये। उपाधेस्तादृशलक्षणे मानाभावाच्च।

## स्नेहाधिकारः

जलविशेषगुणं स्नेहं लक्षयति—**स चेति**। संग्रहे द्रवत्वमपि कारणं, तच्च नैमित्तिकद्रवत्ववति घृतादौ तैले चास्ति अतो न केवलं जलमात्रवृत्तिरसौ इत्याशङ्कां लक्षणेन पराकरोति गन्धवृत्त्यवृत्तिपदेन। मात्रपदेन च तेज आदिद्रव्यवारणम्। उद्वर्तनजन्या मर्दनकृता। ननु घृतजलादौ जलीयभागेन स्नेहवत्त्वे जलस्य च दहननाशकत्वं प्रसिद्धम् घृतादेश्च दहनानुकूल्यान्न जलीयमात्रत्वं स्नेहस्येति चेन्न, अपकृष्टस्नेहं जलं वह्निं नाशयति न प्रकृष्टस्नेहम्। तत्प्रकर्षो हि दहनानुकूलस्तेन च दोषः। ननु घृतादौ

परम्परया जलस्नेहवत्त्वे तथैव सांसिद्धिकद्रवत्वमपि स्यादिति चेन्न, तस्य नैमित्तिकत्वेन पार्थिवत्वसिद्धेः।

## ज्ञानाधिकारः

ज्ञानं लक्षयति **इच्छेति**। जानाति, इच्छति यतते, व्याप्रियते इति प्रतीतिक्रमेण ज्ञानेच्छाकृतिव्यापाराणां क्रमजन्यानां साक्षात्कारकारणानां आत्मविशेषगुणानां कार्यकारणभावानुसारेण निरूपयति। इच्छायाः अव्यवहितप्रागभावक्षणे वर्तमानकारणसामग्रीत्यर्थः सुखादिपरम्पराकारणवारणाय साक्षादिति। आत्ममनः संयोगवारणाय विशेषेति। तद्वति-रजतत्ववति न शुक्तौ तदवगाही रजतत्वप्रकारावगाही, अनुभवः न स्मृतिः; स प्रमाज्ञानम्। तदन्यत् अप्रमाणज्ञानं चतुःप्रकारकमित्याह **संशयेति**। विपर्ययो भ्रमः स च तदभाववति तत्प्रकारकं ज्ञानं, यथा पीतः शङ्खः। उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम् स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानं संशयः यथा स्थाणुर्वा पुरुषो वेति निष्कृष्टार्थः। स्मृतिलक्षणे प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदं देयम्। गृहीतार्थंप्रत्यक्षीकरणेन ज्ञानस्य प्रामाण्यनिश्चयाय संवादोऽपेक्षितः। तज्ज्ञानस्याबाधितत्वेऽपि अगृहीतत्वाभावेन न प्रामाण्यम्। तस्य संस्कारजन्यत्वाभावान्न स्मृतावतिव्याप्तिः। अख्यातिवादिप्राभाकरमतमुल्लिखति **भ्रमेति**।

## सुखाधिकारः

सुखं लक्षयति **इच्छाविषयत्व इति**। 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति' नियमो न सुखदुःखयोः उत्पत्तिक्षणे एवानुभूयमानत्वात् अत एवोक्तं **समानेति** दुःखेऽतिव्याप्तिवारणाय सत्यन्तम्। वैषयिके विषयोपलम्भजन्ये सुखे क्लृप्तेन्द्रियसंनिकर्षो कारणं, उपलम्भस्तु तज्जन्यत्वे सति तज्जन्यजनकत्वाद्व्यापार इत्यर्थः। इदं सुखलक्षणं स्वीये बोध्यमित्याह **अत्रेति**। आधि (भि) मानिक-धनंपाण्डित्यादिविषयकाभिमानोत्पन्नम्। आभ्यासिकं व्यायाममृगया श्रमादि-अभ्यासोत्पन्नं शरीरसौष्टवलाघवविषयकम् मानोरथिकं प्रियविषये कृतचिन्तनोत्पन्नभावनाप्रकटितम्। एतत्सर्वमैहिकं सुखं, पारलौकिकं सोमयागवाजपेययज्ञविश्वजिदादिभिः प्राप्यं अलौकिकं 'स स्वर्गः स्यात्सर्वान्प्रत्यविशेषात्' इत्यादि श्रुतिशास्त्रसिद्धम्। तत्स्वरूपं श्रुत्युक्तं लक्षणकथनेन विवेचयति **यन्नेति**। ग्रस्तं विच्छिन्नम्। अन्तरा इच्छाव्यवधानं अभिलापक्षण एवोपभोग्यमिति भावः। सर्वोत्कृष्टब्रह्मानन्दरूपनित्यसुखमार्थवादिकमिति न विचार्यम्।

## दुःखाधिकारः

दुःखं लक्षयति **द्वेषेति**। सुखेऽतिव्याप्तिवारणाय सत्यन्तम्। अत्रापि उपलम्भस्य व्यापारत्वं बोध्यम्। योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमेन। द्विक्षणस्थायित्वं दुःखस्य। आध्यात्मिकं शरीरमनसी अधिकृत्य जायमानस्तापः। आधिदैविकं देवान्यक्षादीन्, दिवः प्रभवान् वातवर्षातपशीतोष्णादीन् वाधिकृत्यजायमानस्तापः। आधिभौतिकदुखंभूतानि जरायुजाण्डजस्वेदजोद्भिज्जरूपाणि चौरवैरिकुक्कुरसिंहव्याघ्रमहिषपक्षिसर्पयूका दंशभशकवृश्चिकनक्रमकरवृक्षशिला प्रभृतीनि चराचरजातीयानि निमित्तीकृत्य जायमानं दुःखम्।

## इच्छाधिकारः

इच्छां निरूपयति **द्वेषान्य इति**। यत्नाव्यवहितपूर्वं अवश्यमिच्छानुभूयते, तद्विना न यत्न-

संभवः । बलवद्विष्टसाधनताज्ञानस्य प्रतिबन्धकत्वात् हानरूपयत्नकारणद्वेषवारणाय **द्वेषान्य इति** । निरुपाधिः इतरेच्छानधीनेच्छाविषया, औपाधिकी इष्टसाधनताज्ञानोपाधिजा । अभ्यवहरणं भोजनम् । रागः आसक्तिः । प्रत्युपकारानपेक्षपरदुःखदूरीकरणेच्छा करुणा । उपभोग्य जन्यदुःखसहनेच्छा तितिक्षा । आपातत इच्छा निगूहनं न वैराग्यमत आह **गूढेति** । परैर्यत्र द्रव्यं विनियुज्यत एतादृशावश्यककार्येऽपि व्ययानिच्छा कार्पण्यम् । सिसृक्षा स्रष्टुमिच्छा, संहर्तुमिच्छा संजिहीर्षा ।

## द्वेषाधिकारः

द्वेषं लक्षयति **स चेति** । परकीयेति आदिः । क्रोधद्रोहमन्युअसूयाऽक्षमासहिष्णुतापकर्षामर्षेर्ष्यादिस्वरूपाणि द्वेषस्य मनोविकारादिभेदैरित्याह **तन्नेति** । द्वेषेण निवृत्तियत्नश्चेच्छत्रुवधादपि निवृत्तिः स्यादित्याशङ्क्यां निवर्तयति-**शत्रुवधादौ इति** । बलवदिष्टसाधनताज्ञानस्य प्रतिबन्धकत्तदन्यत्वं लक्षणे देयम् ।

## यत्नाधिकारः

शरीरतदवयवचेष्टांऽसाधारणकारणं यत्नः । तत्र प्रमाणमाह **यते इति** । तदन्यः जीवनयोनिभिन्नः प्रवृत्तिनिवृत्तिस्वरूपः । सुषुप्तौ बाह्यप्रयत्नाभावेपि प्राणापानसन्तानप्रेरणाऽनुभूयते तत्र जीवनहेतुरदृष्टमेव कारणम् । न यत्न इति चेन्न; तस्य यत्नस्यातीन्द्रियत्वात् । प्रत्यक्षप्रयत्नेनाधानपूरकरेचकादौ यत्नसाध्यत्वदर्शनात्तद्दृष्टान्तेन प्राणसंचारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वानुमानेन च तत्सिद्धिः । स च यत्नो यावज्जीवनमनुवर्तते । अदृष्टस्य नासाधारणहेतुत्वम् । बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानत्वे सति कृतिसाध्यत्वं प्रवृत्तौ जनकम् । निवृत्तौ च द्विष्टसाधनताज्ञानम् । स च यत्नः शारीरव्यापारजनकः । चेष्टाया लक्षणमाह **प्रयत्नवदिति** ।

**इति सिद्धान्ते गुणनिरूपणम् ॥**

• • •

## पृथक्त्वनिराकरणाधिकारः

अथ गुणानां निराकरणम् । तत्र प्रथमं पृथक्त्वाङ्गीकारो वैशेषिकाणामनुपपन्न इति तल्लक्षणपरामर्शेनाह **पृथगिति** । पृथग्व्यवहारस्य कथमन्योन्याभावव्यवहारेण सिद्धिरिति सोदाहरणमाह **घट इति** । यत्रान्योन्याभावः सामानाधिकरण्यसंबन्धेन तत्रैव पृथक्त्वं तेन स व्यवहारो नानुपपन्नः घटे, तथापि घटरूपे पृथक्त्वमन्योन्याभावश्च नोपपद्यते । वैपरीत्यं पृथक्त्वमेव अस्तु नान्योन्याभावः । गुणादौ गुणानङ्गीकार इत्यत सानुपपत्तिस्तदवस्थैव । अन्योन्याभावानङ्गीकारे एतद्घटरूपमेतद्घटात्पृथक् इति प्रतीत्यनुपपत्तेः । एतद्रूपमेतद्रूपात्पृथक् इति प्रतीत्यापत्तेश्च । किं चावधि ज्ञानसापेक्षा पञ्चमी अभावेऽनुपपन्ना स्यादित्याह **ननु इति** । सूत्रेणान्योन्याभावविशिष्टार्थकपदप्रयोग एव पंचमीविधानं, तेन घटात्पटो नेति इति नापत्तिः । नञः विशिष्टार्थकत्वाभावात् । निपातातिरिक्तान्योन्याभावार्थकपद प्रयोगस्यैव पञ्चमीप्रयोजकत्वं कल्प्यते, तेन घटाद्भेद इत्यस्यानुपपत्तिः । अप्रयोगादेव—अन्यादिविशिष्टपदाप्रयोगादेव । अर्थान्तरता गुणान्तरसिद्धिः ।

## विभागनिराकरणाधिकारः

**विभागलक्षणसिद्धये** तत्कालीनसंसर्गोऽपेक्ष्यतेऽतस्तस्या भावत्वं विभागस्वरूपं न संभवतीत्याह **रूपमिति** । गुणगुणिनोर्न संयोगस्तत्परिहाराय द्रव्यवृत्तित्वनिवेशे आह **अवयवेति** । स्वं विभागस्तदधिकरणस्तत्कालीनः यः संसर्गः स्वत्वादिः तस्य ध्वंस एव विभागलक्षणम् । हिमवद्विन्ध्ययोः संसृष्टत्वविरहादेव न विभक्तौ इति प्रतीतिः । संयोगस्य द्विष्टत्वेनोभयप्रतियोगिजनितसंयोगनाश एव विभाग नान्यजसंयोगनाश इत्याशङ्कां निरस्यति **अन्यतरेति** । संदेहवारणाय ध्वंसस्तथा वा विशेषणीयः । अत एव यावत्प्रतियोग्यधिकरणाधिकरणकसंयोगध्वंसस्य विभागत्वादेव भ्रातृपितृव्यादिसमेषामुल्लेखः स्मृतौ समुल्लसति न ययोः कयोश्चित् । स्वत्वसंबन्धवत् संप्रदानसंप्रदेयसंसर्गवतोरपि संसर्गबाधो विभागः इति श्रुतिपरामर्शेन निर्दिशति **यस्येति** ।

ननु माऽस्तु संयोगो गुणान्तरं, विभागाभावेनैवोपपत्तेरिति चेत्तत्राह **नेति** । विभागाभावः किं विभागप्रागभावोऽभिप्रेयत उततद्ध्वंसः ? नाद्यः इत्याह **एवं हीति** । शरक्रियाक्षणे विभागप्रागभावरूपसंयोगसत्त्वात् तदुत्तरक्षणे विभागोत्पत्तौ संयोगाभावात् 'शर उत्तरदेशे न संयुक्त' इति बुद्धिः स्यात् । द्वितीये आह **तथापीति** । शरक्रियाक्षणेऽन्यनिरपेक्षा क्रिया उत्तरदेशविभागध्वंसजनिका तदुत्तरक्षणे एवोत्तरदेशसंयोगी शर इति बुद्धिः स्यात्, विभक्तबुद्धिश्च न स्यात्कर्मणा विभागनाशात् ।

यत्तु वैशेषिकाः हेत्वहेतुविभागजविभागमङ्गीकृत्य संयोगनाशकत्वेन विभागसिद्धिः, न च क्रियायास्तन्नाशकत्वं करकर्मणा कायतरुसंयोगनाशायोगादित्याहुः । तत्रोत्तरमाह **गुणान्तरेति** । स्वं संयोगः, तदाश्रयः करः तदाश्रितकायसंयोगत्वं नाश्यतावच्छेदकम् । विभागानङ्गीकारे विभक्त इति प्रतीतेरपलापः स्यादिति चेन्न सा भावत्वसाधिकाऽपि तु प्रमाणगोचरव्यवहारमात्रेति ॥

## परत्वापरत्वनिराकरणाधिकारः

परापरव्यवहारनिमित्ते **परत्वापरत्वेऽपि न गुणौ** मीमांसकमते। तर्हि दैशिककालिकयोस्तयोर्व्यवहारयोः कथमुपपत्तिरिति चेदाह **अल्पेति**। अल्पसूर्यक्रियाकृतापरत्वं यौवने, बहुसूर्यक्रियाज्ञापितपरत्वं च वार्धक्ये उपपद्यते। ननु संयोगो द्विष्ठः व्यासज्यवृत्तिः न सावधिकः, परत्वापरत्वे तु सावधिके प्रत्येकवर्तिनी चेति चेदाह **वस्तुतस्तु इति**। संयोगक्रियाणां संख्याविशिष्ठत्वात्सावधित्वमुपपद्यते यद्यपि न केवलानाम्। अल्पत्वं बहुत्वं च संख्योपष्टम्भादेव भवति। अथवा शब्दसामर्थ्यादेव सावधित्वाद्युपपद्यते चलतीत्यत्र यथा न कर्माकाङ्क्षा, गच्छतीत्यत्र तु भवत्येव यद्यपि अर्थोऽविशिष्टः उभयोः। अपि च बहुतराल्पतरसंयोगक्रिया व्यञ्जकेनैव व्यहारोपपत्तौ किं गुणान्तरस्वीकारेण ?।

ननु ये संनिकृष्ठतराः संयोगास्तेऽल्पा एवेति सापेक्षत्वात्ते बहवः तथा विप्रकृष्टतरा अपि तेऽपि अल्पाः, अतोऽननुगतत्वं तयोरिति चेदाह-यश्चोभयोः समो दोपस्तत्र नैकतरश्चोद्यः। **उदयनाचार्यैरपि** गुणकिरणावल्यां तथैव संनिकृष्टत्वविप्रकृष्टत्वेऽभ्युपगत इत्याह **तादृशयोरपीति**।

ननु रात्रौ दिवाकरपरिस्पन्दाभावात् रात्रिजात अव्यवहितदिनजातयोः स्पन्दव्यभिचार इति चेन्न; द्विपान्तरे तदा दिवाकरक्रियाणां वर्तमानत्वेन तासां ज्ञानस्य चात्र घटीयन्त्रनक्षत्रचलनादिभिर्जायमानत्वात् न व्यभिचारः। सूर्यस्पन्दापेक्षया क्षणघटितसंनिकृष्टविप्रकृष्टयोर्व्यभिचारशङ्काऽसंभवात् तादृशलक्षणे आह **यज्जन्मेति**। यदित्यादिः। अत्यन्ताभाव एव ध्वंसव्यवहारस्तया प्रागभावव्यवहारोऽपीति मतं तदा नैते लक्षणे उपपद्येते तर्हि तत्र क्रियाबहुत्वं क्रियाल्पत्वं च क्रमेण अपरत्वाश्रयक्षणापेक्षया परत्वाश्रयत्वाभिमताधिकरणक्षणापेक्षयेति ज्येष्ठत्वकनिष्ठत्वे बोध्ये। कालिकपरत्वापरत्वे जन्ये एव। नित्ये तत्पूर्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेस्तदनन्तरोत्पन्नत्वरूपकनिष्ठत्वबुद्धेर्निमित्तकारणस्य, कालसंयोगरूपासमवायिकारणस्य चाभावादिति भावः।

## संस्कारनिराकरणाधिकारः

**संस्कारं** लक्षयति **तत्त्वमिति**। संयोगेऽतिव्याप्तिवारणाय अवृत्त्यन्तम्। वेगस्य मूर्तपञ्चके, भावनायाश्चामूर्ते आत्मनि वृत्तित्वान्मूर्तामूर्तवृत्तीति। तत्र **वेगलक्षणं** निरूपयति **नोदनेति**। शरीरादौ नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्मनाशस्तत उत्तरकर्म, उत्तरकर्मणापि पूर्ववेगनाशस्ततो वेगान्तरोत्पत्तिरिति। विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वात्पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात्, कर्मनाशकस्योत्तरसंयोगस्य तदानीमभावात्। प्रत्यक्षानुमानप्रमाणाभ्यां तत्सिद्धिं दर्शयति **पुन इति**। अयुगपत्पातकल्प्यवेगस्य मन्दत्वतीव्रत्वे प्रत्यक्षे, तत्र सन्तान एकत्वयोः वैमत्यम्।

**भावनाख्यसंस्कारे** प्रमाणमाह **अनुभवस्येति**। कार्योत्पत्त्यव्यवहितपूर्वक्षणे स्वस्वव्यापारान्यतराभावे पूर्वानुभवस्य कारणत्वासंभवात् संस्कारव्यापारः कल्प्यः। स्मृतिसंस्कारयोर्ज्ञानत्वहेतुतायां विनिगमनाविरहेऽपि उपेक्षास्थले संस्कारकल्पनायाः गुरुत्वाद्वैयर्थ्याच्च उपेक्षान्यनिश्चयत्वेनैव-स्मृतिहेतुत्वम्।

प्रत्यभिज्ञायाः इन्द्रियसंनिकर्षसचिवसंस्कारजन्यत्वेपि संस्कारोद्बोधमपेक्ष्य तादृशसंस्कारजन्यस्मृतेरेव कारणत्वं केचिदिच्छन्ति। क्वचित्तु स संस्कारः समूहालंवनद्वारा स्मृतिं जनयति, यथा गामानयेति प्रत्येकवर्णानुभवजनितसंस्कारैर्मिलत्वा पदत्वापन्नानेकवर्णालम्बनैका स्मृतिर्भवति।

एवमेव प्रत्येकपदाहितसंस्कारैरेकीभूय वाक्यस्मृतिर्जन्यते । अनुद्‌बुद्धसंस्कारस्य निर्विषयत्वेऽपि न घटज्ञानजन्यसंस्कारे विनष्टे पदज्ञानजन्यसंस्कारेण घटस्मृतिप्रसङ्गः, फलबलेन स्वजन्यसंस्कारसंबन्धस्यावश्याङ्गीकरणत्वात् । अंशे उपेक्षानुपेक्षात्मकसमूहालम्बने अनुपेक्षाज्ञानजन्यसंस्कारेण तद्विपर्यस्यैव स्मृतिर्नापरस्येति भावः ।

**स्थितस्थापक संस्कारं** लक्षयति **स्पर्शवन्मात्रवृत्तीति** । वेगेऽतिव्याप्तिवारणाय स्पर्शवन्मात्रेति, तस्य स्पर्शशून्यमनस्यापि वर्तमानत्वात् । तत्र अनुमानप्रमाणमाह **स चेति** । स आकर्षणेन पूर्वावस्थातोऽन्यथाभूतं घनतरावयवसंनिवेशयुतं वेगवन्तं स्वाश्रयं नियमतः पूर्वावस्था प्रापयन् अनुमानविषयीभवति, न प्रत्यक्षतः संज्ञायते । यथा चैत्रेण बलादवनामिता धनुःशाखा पुनः पूर्वावस्थामेवापद्यते । सूत्रविशेषः भूयोभूयः अनृज्वीकृतः ऋज्वस्था भवति, शुनः पुच्छं च वक्रमेवावति । तेन तेन च कार्येण स्थितस्थापकसंस्काराख्यासमवायिकारणमनुमीयते । मुक्तः शरः न स्वपूर्वस्थानमापद्यतेऽतो नायं वेगः । त्रयाणां संस्कारणां साधारणं संस्कारत्वव्यञ्जकं किमित्यपेक्षायामाह **सजातीयोत्पादकत्वमिति** ।

सिद्धान्ते क्रमेण तेषां कर्मणि शक्तौ चान्तर्भावं स्पष्टयति **तत्रेति** । संयोगजसंयोगवत्कर्मसन्ताने पूर्वकर्मोत्तरकर्मणोऽसमवायिकारणं भवति । अनुमाने शब्दाहेतुयत्नवदात्मसंयोगरूपनोदनाजन्यत्वस्योपाधित्वम् । स हि कर्मजन्यत्वाभावव्यापकः कर्मत्वाव्यापकश्च वेगेन याति, प्रकृष्टकर्मणा गच्छतीत्यर्थः प्रत्यभिज्ञास्मृतिहेतुर्भावनाऽपि विषयनिष्ठा शक्तिर्नात्मगुणः । तृतीयः स्थितस्थापकोऽवयवरचनानिष्ठाऽथवा क्रियाविशेषाहिता शक्तिर्न गुणान्तरमिति तात्पर्यम् ।

## धर्माधर्मगुणनिराकरणाधिकारः

वार्तिककारोल्लिखितानि धर्माधर्मविषयकमतान्तराणि परामृशति **धर्मस्तु इति** । तानि पराकरोति **प्रयोग इति** । तत्र पञ्चसु मतेषु शक्तिग्रहनिदानभूतः लौकिकः धर्मशब्दप्रयोगो न दृष्टः । वार्तिकस्थपदानि क्रमेण व्याख्याति **नृगुण इति** । अपूर्वजन्मन अपूर्वयागस्वर्गयोरन्तराले व्यापारभूतम् । 'गोदोहनेन पशुकामस्य प्रणयेत् इत्युपदिष्टं गोदोहनम् । ननु

'कर्मनाशजलस्पर्शात् पिपाशा पानमात्रतः ।<br>गण्डकी वाहुतरणाद्धर्मः क्षरति कीर्तनात्' ।।

इति वचनोक्तधर्मशब्देन यागगोदोहनादेर्न ग्रहणं न युज्यते तेषां पूर्वमेव विनष्टत्वादतः तज्जन्यत्वे सति स्वर्गजनकापूर्वे एव प्रयोगसामञ्जस्यमिति चेदाह **प्रयोगस्तु इति** । तेषां यागगोदोहनादीनाम् । तदङ्गीकारे शक्त्यङ्गीकारे मनोवृत्तिविशेषरूपधर्माङ्गीकर्तृणां सांख्यानां मतेन शङ्कते, **ननु इति** । संकल्पस्यापि मनोवृत्तित्वात्तस्य च धर्मत्वस्वीकृतेः । तत्राह—'सर्वं मन एवेत्यस्य तत्सर्वं मनोधीनमित्येवार्थः । सिद्धान्ते तु संकल्पशक्तिरूपाः यज्ञादयः आत्मधर्मा इति श्रुतिप्रमाणम् । आर्हतसिद्धान्तं विकल्प्य खण्डयति **पुण्येति** । परमाणुषु धर्मप्रयोगाभावात् न शक्तिग्रह इत्यर्थः । तार्किकाणां अदृष्टस्यात्मगुणत्वं, फलहेतुत्वात्फलस्य च भोक्तृत्वगामित्वेन, कर्तृभोक्त्रोश्च सामानाधिकरण्यनियमादिति मतं प्रत्याख्याति **यत्तु इति** । वैश्वानरीलक्ष्म्याः पूर्वाङ्गानुष्ठानेऽव्याप्तिः, तत्रार्धमात्रानुष्ठानस्य धर्मत्वेऽपि न फलहेतुत्वमतो लक्षणासङ्गतेः । धर्मलक्षणमधर्मेऽतिव्याप्तं चातो नात्मगुणत्वम् प्रत्यक्षानुमानश्रुतिप्रमाणैः अन्तःकरणवृत्त्यादीनां पुरुषार्थसाधनत्वं न ज्ञायते इति उपरितनविमर्शेन साधितम् तथा स्वर्गसाधनं याग-

साध्यं तद्व्यतिरिक्तं व्यापाररूपमपूर्वमपि ज्ञातुं न शक्यम् । तथा सति अपूर्वरूपत्वे स्वीकृते श्रुतहानाश्रुतकल्पनाप्रसङ्गः, व्यापाराङ्गीकरणे च मानाभावः फले स्वर्गाद्युद्देशने प्रवृत्तस्य यागादिसाधनं शक्तिरूपं, पश्वादिफलोत्पत्ती चापि तथा । तद्व्यतिरिक्तं अपूर्वं नास्ति । सकलपदार्थानां शक्तयः तद्वाचकशब्दैर्विशिष्टाः न प्रयुज्यन्तेऽतोऽपूर्वे धर्मवाच्यत्वं न संभवति ।

धर्मशब्दस्य यौगिकत्वमतं निरस्यति **यत्तु इति** । धर्मः प्रीतिसाधनं बलवदनिष्ठाननुबन्धीष्टसाधनं धृञ्-प्रीतौ धातोः साधनार्थे मन् प्रत्ययान्तः धर्म शब्दः इति सुचरितमिश्राभिप्रायस्तत्राह **तन्नेति** । अलौकिकवाचिधर्मशब्दस्य लौकिकेऽतिव्याप्तिः । योगाप्रतीतेः-प्रीतिसाधनत्वरूपयौगिकार्थाप्रतीतेः । रूढधर्मत्वं परिष्करोति **तत्त्वं त्विति** । समानाधिकरणपदप्रयोजनमग्रे स्पष्टीकरिष्यते । 'श्येनेनाभिचरन्यजेत' इति फलार्थविहितत्वेऽपि श्येनयागस्य 'मा हिंस्यात्सर्वाणि भूतानी' ति निषेधविषयत्वेन न धर्मत्वम्, तत्रातिव्याप्तिवारणाय सत्यन्तम् । ननु लक्ष्यतावच्छेदकावच्छिन्नातिरिक्ते लक्षणगमनेऽतिव्याप्तिर्न लक्ष्ये, श्येनस्तु विहितत्वाल्लक्ष्य एव न निषेधविषय इति चेदाह-अभिचरन् वैरिमारणं इच्छन् तेन मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात् । विहितत्वेऽपि अभिचारे प्रायश्चित्तोपदेशात्-अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति' इति । न चैवं यज्ञीयपशुहिंसाया अपि प्रत्यवायजनकत्वापत्तिरिति वाच्यम्; अनुपदिष्टप्रायश्चित्तहिंसेतरहिंसापरत्वान्मा हिंस्यादिति निषेधविधेः । सिद्धान्ते श्येनस्यानर्थत्वसूचनात्, उपधेयार्थसंकरेऽपि धर्माधर्मोभयोपाध्योरसंकरादुभयरूपतापि न युज्यते । अथ धर्मस्य विधिनिषेधोभयरूपत्वमस्तु इति चेत्तत्राह **उक्तसूत्रभाष्यवार्तिकाद्यालोचने इति** । न च तस्य तामसधर्मत्वं युक्तं, तामसधर्मो हि अभिचारादिशून्यपरापकारार्थं विहितो दुर्गास्तवपाठादिः 'रिपवः संक्षयं यान्तीति' फलसूचकः । केवलादृष्टद्वारकः अग्रिमं पापं प्रतिसंधाय तस्य तामसत्वं । हिंसायां चादृष्टद्वारकत्वं विशेषणम् ।

ऋत्विगधिकरणकर्शहिंसा व्यधिकरणयजमानाधिकारिकहिंसा निषेधविषयत्वाद्धर्मः स्यात्तत्रातिव्याप्तिवारणाय समानाधिकरणपदम् । चतुर्विधद्रव्यादिष्वेव धर्मपदप्रयोगो नान्यत्रापूर्वादौ । चातुर्विध्यमाह । **दध्नेति** । अत्र दधिपदं जातिवाचकम् । गौर्दुह्यते यस्मिन् तत्पात्रं गोदहनं द्रव्यम् । नीचैस्त्वं गुणः, यजनक्रिया याग. ननु यागादिष्वपि धर्मशब्दप्रयोगः कुत्र दृश्यते इति चेदाह **इदं चेति** । विधिः यत्फलोद्देशेन साधनबोधकः तथा सत्फलकामुकाधिकारिकः तन्निरूपित एव तस्य धर्मः न तु तज्जन्योऽपूर्वादिः । अतः एव द्रव्यादिष्वेव धर्मपदशक्तिग्रहो लोके दृश्यते इत्याह-यागादिषु । वेदेऽपि शक्तिग्रहं दर्शयति **यज्ञेनेति** । ननु 'यज्ञं' एकवचनं पुल्लिङ्गश्च शब्दः, 'धर्माणीति' बहुवचनं नपुंसकलिङ्गश्चातो व्यत्ययेन परस्परवाच्यवाचकत्वासंभव इति चेदाह-**छान्दसत्वादिति** । 'कृतयागः धार्मिक 'इति तु शक्तिरूपयागयुतशक्तिमान् इति भूतपूर्वरीत्या प्रयुज्यते । यद्यपि धर्मस्य द्रव्यादिरूपेण चातुर्विध्यं तथापि तेषां धर्मत्वं द्रव्यत्वरूपेण न, अपि तु श्रेयःसाधनत्वरूपेण । यतो धर्मो नेन्द्रियगोचरः द्रव्यादीनि च प्रत्यक्षगोचराणि । 'चित्रया यजेत पशुकामः,' 'गोदोहनेन पशुकामस्य प्रणयेदित्यादौ उपदिष्टानि पश्वादीनि फलानि तत्साधनत्वेन चित्रादीनां धर्मत्वं, वेदेन तथा शब्दप्रयोगात् । एवं धर्मपदार्थप्रख्यापनं कृत्वा तथैव लौकिकप्रयोगानुसारेणाधर्मपदार्थनिर्वचनमतिदिशति **एवमिति** ।

**इति भाट्टार्कव्याख्यायां अर्कमाधुर्यां अनन्तशास्त्रिकृतौ गुणनिरूपणम् ॥**

---

## कर्माधिकारः

'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः' इति न्यायेन कर्मपदार्थं साधयितुं तत्र लक्षणप्रमाणे दर्शयति तत्त्वं तु इति । व्यवहारसिद्धः कर्मक्रियाप्रभृतिपदप्रयोगेण संज्ञातेषु व्यक्तिषु सामान्यभूतः । योग्यमूर्तिषु प्रत्यक्षयोग्यपृथिव्यादिचतुष्टये बाह्यचक्षुरादिन्द्रियज्ञेयं स्पन्दकर्म, सर्पचलने प्रतीयते । प्रत्यक्षप्रमाणसिद्धत्वान्नानुमानगम्यम् । प्रभाकरः संयोगविभागानुमेयं कर्मेत्यभ्युपगच्छति तन्मतं दूषयति अबुद्धेनि । कर्म संयोगविभागकार्यानुमेयं तज्जनकत्वात् कपाल इत्यनुमाने हेतुरर्थान्तरसाधकः । आत्ममनःसंयोगेनापि कार्योपलब्धेः तात्सिद्धिः स्यात् तत्सत्त्वेन संयोगविभागयोर्वर्तमानत्वेन । ननु भट्टाभ्युपगमो भाष्यविरोधित्वादपसिद्धान्तः शबरस्वामिपादैः कर्मणोऽतीन्द्रियत्वोक्तेरिति चेन्न; तात्पर्यानवगमात् । अतीन्द्रियात्ममनःसमवेता क्रियाऽतीन्द्रिया न बाह्यसमवेता । तत्र मनोनिष्ठक्रियाऽनुमेया, आत्मनिष्ठसंकल्पत्यागादि कर्म मनोग्राह्यमित्येवाशयः ।

अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतरूपाभिधाव्यापारः शब्दनिष्ठः, शाब्दप्रमाणेनैव तत्प्रतीतिः । एवं संकल्पाभिधाबाह्यक्रियाणां कर्मत्वोपपत्तौ तत्र तार्किकाणां सांकेतितं मतमुपन्यस्य प्रत्याख्याति यत्तु इति । संकल्पक्रियाया गुणत्वं, अभिधाव्यापारस्य च शक्तित्वाङ्गीकारेऽवशिष्टस्पन्दमात्रस्य कर्मत्वे कर्मक्रियाशब्दौ पारिभाषिकौ शास्त्रीयौ भवेताम् व्यावहारिकप्रतीत्यपलापश्च प्रसज्येत । 'योगाद्रूढिर्बलीयसी' ति न्यायेन रूढौ वा प्रसज्येयाताम् । परं यौगिकत्वसंभवे न रूढिर्व्यावहारिकी । तत्र यौगिकत्वं दर्शयति कृञ इति । स्मृतिसूत्रकोशादिव्यवहारश्चानुपपद्येत । आलंकारिकाणामपि अभिधालक्षणयोः क्रियात्वे संमतिमाह आलंकारिका इति ।

यागसंकल्पस्य द्रव्यस्वत्वत्यागस्य च क्रियात्वं विहाय आत्मगुणत्वाभ्युपमे न किमपि प्रमाणम् । आत्मविशेषगुणान्यतमत्वे ज्ञानत्वे इच्छात्वे वा वस्त्वधीनत्वान्न विधिः सम्भवति । प्रमाणेनाज्ञेयत्वाच्च न ज्ञानत्वम् । बहिर्विषये द्रव्यस्वत्वे न मनःस्वातन्त्र्य, तेन संकल्पत्वं क्रियात्वान्तर्गतमतः स्पन्दमात्रं कर्मेति तार्किकमतमपास्तम् ।

स्पन्दं लक्षयति स्पन्दस्तु इति । परमाण्वनङ्गीकारात् व्यापके क्रियाविरहात् अनित्यमात्रेति । संयोगविभागसमवायिकारणं अनित्यकार्यतन्मात्रवृत्तिः स्पन्दः क्रियासमवायिकारणतावच्छेदकमूर्तत्वावच्छिन्ने वर्तमानः प्रयत्नाद्यसमवायिकारणकश्च । चतुर्थक्षणे उत्पन्नसंयोगेन नाश्यः, निर्गुणः, उत्पत्तौ संयोगविभागापेक्षाशून्यः केवलं समवायिनिमित्तकारणमपेक्षते न तु तज्जन्यसंयोगादि । स्वाश्रय पराश्रयोभयनिष्ठ संयोगविभागरूपकार्यारम्भकः । वेगः न कर्मकार्यं नोभयनिष्ठः किन्तु स्वाश्रयैकवृत्तिः । सजातीयानारम्भकश्च स्पन्दः स्पन्दजस्पन्दानङ्गीकारात् । तथाहि-क्रिया क्रियातो विभाग इत्यादिक्रमेणोपपत्तेः पुनः क्रियावति सन्तानसिद्धये संयोगेनैव निर्वाहान्न स्पन्दान्तरकल्पना गौरवाच्च, स्पन्दान्तराभाव एव वरम् । पर्यायशब्दः-प्रतिध्वनिः फलबलकल्प्यशक्तिवशात् गुरुत्वे आद्यपतनकार्ये व्यस्तं, पर्यायशब्दे नैकांश्च संयोगानपेक्षमाणः संयोगो नोदना । तेन तनु घनोदकयोः कर्म । ननु चुम्बकसमीपस्थलोहे,

अभिमन्त्रितचपके तथा विषपर्वणि यो गत्यनुकूलव्यापार उपलभ्यते तत्रोक्तनोदनाख्यसंयोगकारणानि नोपलभ्यन्तेऽतो नोदनाभावात् कथं स्पन्द इति चेदाह - **अहंवदात्मसंयोगमात्रमिति** । मन्त्रपाठादिना भावनातिशयोत्पन्नाभिमानसहितात्ममनःसंयोगः एकमात्रस्तत्र कारणमित्यर्थः । ननु तत्रापि चुम्बक लोहयोः अचेतनयोः कथमात्ममनःसंयोगसंभव इति चेत्तत्रोच्यते-नैसर्गिकः शक्तिविशेषो वा कारणम् ।

वैशेषिकमतोल्लेखपूर्वकं स्पन्दप्रभेदानाह **वैशेषिकास्तु इति** । तत्र पञ्चापि उत्क्षेपणत्वादयो जातयः; आद्याश्चतस्रो न जातयः, गमनत्वमेव जातिः गमनत्वं जातिरवशिष्टा उपाधयः इति विप्रतिपत्तीः प्रदर्शयति **अत्रेति** । ऊर्ध्वदेशसंयोगत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया उत्क्षेपणत्वजातिः सिद्धा । एवं अधः संयोगत्वनिष्क्रियावयवाभिमुखासंयोगत्वनिष्क्रियावयवाभिमुख्यविरोधिसंयोगत्व-अनेक दिक्संयोगत्वानि कारणतावच्छेदकान्यधिकृत्यापक्षेपणत्वादयोऽपि जातयो ज्ञेयाः । संकरस्य जातिबाधकत्वाच्चतसृषु जातिषु उत्क्षेपणत्वादीनां सांकर्यापत्तेर्न जातित्वं, गमनत्वस्य तु केवलसंयोगत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वाज्जातित्वमिति भावः । तादृशसंयोगत्वेन-ऊर्ध्वदेशसंयोगत्वादिना एकमात्रधर्मवृत्तित्वादुपाधित्वं चतसृणाम् ।

अत्र मीमांसकसिद्धान्तमाह **वस्तुतस्तु इति** । उत्क्षेपणत्वादिजातिपञ्चकमेव अनुगतप्रतीतिसिद्धत्वात् न च संयोगविशेषजनकतयाऽनुमानतस्तत्सिद्धिः अवधिभेदेनैक एव देशः ऊर्ध्वः अधश्च गण्यते । अतस्तद्घटितो गुरुधर्मोऽनवच्छेदकः ननु कथं नानाकर्माणि, कथं वा विशिष्टानां तेषां व्यञ्जकत्वं ? यतः वनत्ववत् तेषां एकत्वमेवेति मतं खण्डयति **व्यक्तमिति** । तासां-तत्संनिवेश-विशेषविशिष्टनानाक्रियाणाम् । भङ्गिषु संनिवेशविशेषरूपप्रकारभेदेषु । परेषामभिप्रायद्वारा सिद्धान्तपुष्टिं करोति **परे तु इति** । गमनत्व-भ्रमणत्वयोर्भेदं स्पष्टीकृत्य भ्रमनिरासं करोति **एतेनेति** । तथोर्ध्वज्वलनत्व-पतनत्व-रेचनत्व-प्रवेशनत्व निष्क्रमणत्व-चेष्टात्व-उत्पत्तित्व-स्थितित्व-विनाशित्वानि कर्माणि अवान्तरजातिरूपाणीति ज्ञेयम् । तत्र भट्टपादसंमतिमाह **अनित्यत्वमिति** ।

व्यवहारे 'गौरुत्पत्स्यत' इत्यादावुत्पत्तिक्रियायामेव भविष्यत्त्ववर्तमानत्वातीतत्वानि सम्बध्यन्ते । क्रियान्वयाभावे गवादीनां तृतीया स्यात् । ननु सूत्रे कर्तरीति निर्देशान्नापत्तिरिति चेदाह **असिद्धकर्तृकत्वेनेति** । वार्तिकेऽपि सिद्धकर्तृकक्रियावाचकाख्यातप्रत्ययत्वादत्र करोत्यर्थो नास्ति असिद्धत्वात् इति सूच्यते । राणककारस्तु सत्तावाचिधातोरपि असिद्धकर्तृकत्वं मन्यते ।

भविष्यत्त्ववर्तमानत्वातीतत्वानां निर्वचनमाह **तत्रेति** । वर्तमानस्य प्रागभावस्य प्रतियोगित्वम् । नन्वत्रान्योन्याश्रयः, वर्तमानभविष्ययोः परस्परावलम्बितत्वात्, अतः वर्तमानत्वं निर्वक्ति **वर्तमानत्वमिति** । ध्वंसक्रियायां प्रतियोगित्वरूपसत्त्वक्रियायोगोऽनवस्थानान्न संभवति इति चेदाह **सत्यमिति** । क्रियान्तरं स्पन्दव्यतिरिक्तम् । तर्ह्यनवस्थापरिहारः कथमिति चेदाह **सार्वजनीन इति** ।

क्षणत्वं वर्तमानत्ववत् क्रियावान्तरजातिरिति सिद्धान्तः । मतान्तराणि खण्डयति **क्षणत्वं तु इति** । स्वानामननुगतत्वात् । ननु मुहूर्तादिः अनेकक्षणसमुदायः क्षणस्तु समुदायी अधरितोऽतो लक्षणान्तरमाह **न चेति** । अस्वातन्त्र्येण मुहूर्तक्षणयोर्न भेदः । समूहालम्बनज्ञाने पर्याप्तिसंबन्धेन समुदायत्वसिद्धिरिति चेदाह **समुदायिनीति** । पर्याप्त्यन्तर्गतः समुदाय्यपि; अतोऽतिप्रसङ्गः । पर्याप्तिसंबन्धमेव विकल्प्य खण्डयति **पर्याप्तिः केति** । उभयथा दोषः, अव्याप्तिश्च । घटीप्रहररूपसमुदायस्य संघातवादिनो

घटादिवद चाक्षुपत्वप्रसङ्गश्च । समुदायिक्षणाधिष्ठितत्वात्समुदायस्य तन्नाशे निराधारत्वेन घट्यादेर्नाश-प्रसङ्गश्च । क्रियास्थायित्वे तज्जन्यविभागस्थायित्वेऽपि च क्षणलक्षणं तत्रैव घटत इत्याशङ्क्यते चेत्तत्राह त्रिभागविशिष्टा क्रिया यथा क्षणस्तथा पूर्वसंयोगसहितायाः अथवोत्तरसंयोगोपहिताया अपि क्रियायाः क्षणत्वं स्यान्न चैकाकारक्षणप्रतीतेस्तेन बाधो युक्तः । अतस्तादृशमतान्तरासंभवात्सिद्धान्त एवोपपन्नः । उपसंहारद्वारा तमाह अत इति ।

इति श्रीपिङ्गलेऽनन्तत्र्यंबकशास्त्रिकृतौ भाट्टार्कव्याख्यायां अर्कमाधुर्यां कर्मनिरूपणम् ॥

———

## सामान्याधिकारः

**सामान्यलक्षणं** निर्वक्ति - **तत्त्वं तु इति** । अनेकवृत्तित्वं संयोगादीनामप्यस्ति तद्वारणाय सत्यन्तम् । जलपरमाणुरूपादावतिव्याप्तिवारणाय विशेष्यम् । ननु तथापि अत्यन्ताभावेऽतिव्याप्ति-रित्यत लक्षणान्तरमाह **अनुगतेति** । अनुगत प्रतीतिं स्पष्टयति **तच्चेति** । तत्र खण्डमुण्डादिषु गौरिति अनुगतप्रतीतिरेव प्रमाणं न शब्दोऽनुमानं च । तदेव विवृणोति **सामान्याभावे इति** । व्यक्तीनामानन्त्या-त्तत्र तद्भिन्नो जातिसम्बन्धो न प्रत्येति, न च तदभिन्नः । गवि अनुगताकारा व्यावृत्ताकारा चेति जाति-व्यक्तिप्रतीतिद्वयमस्ति । द्वयोः सामानाधिकरण्यात् द्व्यात्मकमेकमेव वस्तु तयोर्धियोर्न विरोधः न च 'गौर्वाहीक' इतिवत्खण्डा गौर्मुण्डागौरित्यत्र गौणीवृत्तिः । एवमेवावयवावविनो गुणगुणिनोरपि द्व्यात्म-कत्वं भेदाभेदवत्त्वा दित्यह **एवमिति** ।

ननु एवं अवयवावयविनोरभिन्नत्वे 'पुद्गलपुञ्ज एव घट' इति संघात वादिभिर्बौद्धैः सिद्धा-न्तितमेवाङ्गीकृतं मीमांसकैरिति चेदाह **पटस्येति** । सौगतैः केवलमभेद एवाङ्गीकृतः न भेदः, अत्र तूभयोर्भेदाभेदयोः स्वीकारेण द्व्यात्मकत्वं । ननु द्व्यात्मकत्वात्तर्हि 'कारणगुणाः कार्यगुणानारभन्त' इति वैशेषिकसिद्धान्ताङ्गीकारः इति आशङ्कायामाह **एतेनेति** । रूपद्वयाभावात् नात्र कारणस्य रूपा-त्कार्यस्यपटस्य रूपं भिन्नमस्ति । ननु कथं रूपभेदो नास्ति. यतो नीलकृष्ण तन्त्वारब्धे पटे तन्तुरूपभिन्नं चित्रं रूपं प्रतीयते इति सार्वजनीनमिति चेदाह **नीलेति** । सा प्रतीतिः नानारूपाप्यवगाहने नाना शब्दस्य चित्रपर्यायत्वात् ।

भट्टपादसिद्धान्तवादिभिः **पार्थसारथिमिश्रै**रेतद्विषये अवयवावयविनोः तादात्म्यसंबन्धमनङ्गी-कृत्य वैशेषिकवत समवायाङ्गीकारेण मतभेदः प्रदर्शित इत्येतद्विवृणोति **मिश्रैस्तु इति** । वैशेषिकैः गुण-गुणिनोर्जातिव्यक्त्योः अवयवावयविनोः भिन्नयोः समवायः अयुतसिद्धयोः स्वीकृतः तथैव समवायः तेन चैतेषां भेद एव समर्थितः **मिश्रैः** । अनेकान्तवादिनः-द्व्यात्मकवस्तुसमर्थकस्य । लक्षणा गौणी वृत्तिः ।

सौगतमतेन सामान्यमाशङ्कते-**नन्वन्यायोग इति** । अन्यस्य तद्भिन्नस्यायोगो व्यावृत्तिः । तथा च गौरयमिति प्रतीतौ गोत्वत्वावच्छिन्न गोत्वनिष्ठप्रतियोगितावच्छेदकावच्छिन्नान्योन्याभाववत एव विषयत्वेन भानमिति चेन्न; भावभावयोर्विरोधात् आत्माश्रये हेतुमाह-**गोत्वेति** । अन्योन्याभावग्रहे प्रतियोगितावच्छेदकभानस्यावश्यकतेति नियमात् तत्र गोत्वत्वाच्छिन्नगोत्वग्रहः पूर्वमपेक्षितोऽन्यथा तद-संभवः तथा च स्वग्रहसापेक्षग्रहकत्वादात्माश्रयः । प्रतीत्यनुसारेण तथापि तदङ्गीकारे आह **ग्रहे वेति** । चालनीन्यान्येय शबलायामपि व्यक्त्यन्तरभेदसत्त्वाल्लक्ष्याऽपि सा तद्भिन्ना प्रसज्येत । अन्यायः— अनुपपत्तिः ।

पूर्वपक्षरूपेण सौगतसिद्धान्तं मण्डयति **सौगतास्तु इति** । अश्वादिव्यावृत्तः अश्वादिप्रति-योगिकः । भेदकूटः तदन्यसकलप्रतियोगिकान्योन्याभावसमूहः । गोत्वं गोसामान्यलक्षणम् । अक्लृप्तेति हेतुगर्भ विशेषणम् । नन्वभावग्रहे प्रतियोगिग्रहापेक्षा स चात्र नास्तीति चेत्तत्राह **तस्य चेति** । प्रति-

योगिनः प्रमेयत्वात् सामान्यतः इदंत्वेन ग्रहो यथा विशेषरूपेणापेक्षां न धत्ते तथा गोत्वरूपग्रहोऽपि। अथवा अभावत्वप्रकारकग्रहे एव प्रतियोगिधीः न त्वन्यप्रकारकग्रहे। अत्र तु गोत्वपर्यायान्यव्यावृत्तिरेव। तादृशस्य च गोत्वस्य ज्ञानं अनुपलब्धिप्रमाणेन भवति न चक्षुषा अकारणत्वादित्याह **गोत्वमिति**।

सिद्धान्तत्वेन भट्टपादमतानुसारेण खण्डयति **आचार्यास्तु इति**। रूपादिवदभावोऽपि भावरूपो धर्म इति प्रतिपादितमधस्तात्। तदेवाह **एक एवेति**। अश्वव्यावृत्तिरपि भावः, स खण्डमुण्डादिसकलगोव्यक्तिषु वर्तमानः व्यक्तिभेदेन भिन्नत्वान्नानुगत इति अनुगतत्वप्रतीत्युपपत्तये सामान्यस्वीकार इत्याह **ततश्चेति**। सामान्यधियः आश्रयसकलव्यक्तिसमूदाय न जातिरिति चेदाह **नेति**। असंभवात्-सकलव्यक्तिज्ञानाभावे यत्किंचिद्व्यक्तिज्ञानमेव सामान्यधीकारणमस्तु इति चेदुच्यते **घटसंनिकर्ष इति**। तस्मात्सकलव्यक्तिपरिनिष्ठतगोत्वादिप्रकाराश्रयत्वेन अनुगतव्यवहारोपपत्तिरित्यत्र वार्तिकमाह **भावान्तरमिति**। सामान्ये प्रमाणमाह **वस्तुत्वं इति**। तां पृथिवीत्वादिजातिं विना अनुगतव्यवहारासिद्धेः। ननु अनुगतव्यवहारः अन्त्यावयवसंयोगरूपानुगतसंस्थानरूपानुगमकेनैव सिध्यति, न तत्र जात्यपेक्षेति चेत्तत्राह **जातिमिति**। ननु गन्धसमवायिकारणत्वादेव पृथिवीत्वजातिसिद्धिः, नानुगतव्यवहारादिति चेत्तत्राह **गन्धेति**। ननु पाषाणादौ नाव्याप्तिः, पाषाणभस्मनो हि पाषाणध्वंसजन्यत्वात्पाषणोपादानोपादेयत्वं सिध्यति यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तिरिति चेन्नेत्याह **तत्रापीति**। विवृतमेतत् पृथिव्यधिकारे। व्यङ्ग्यव्यञ्जकयोरैक्यान्न संस्थानगता जातिरिति आहुरित्यस्वरसः।

ननु अनुगतव्यवहारेण जातिसिद्धिः परं तत्सिद्धिः केन प्रमाणेन? न तावज्जात्या अन्योन्याश्रयात्, व्यक्तिषु च काश्चित्प्रत्यक्षेण काश्चिच्चानुमानादिभिरिति चेत्तत्राह **स चेति**। घटादिनिष्ठकार्यतानिरूपितकारणतावच्छेदकतया दण्डत्वजातिं साधयतामपि अन्ततो अनुगतव्यवहार एवाङ्गीकार्यः। अन्यथा भ्रमिव्यापारजनकदण्डवत् अङ्गुल्यादौ तादृशभ्रममाणनिर्झरजलादौ च भ्रमिजनकत्वात् दण्डत्वं प्रसज्येत तदवच्छेदकत्वात्। तथा दण्डे तत्कार्यजनकतावच्छेदकाङ्गुलिजलत्वप्रसक्तिः। अतोऽनुगतव्यवहार एव जातिप्रत्यायकः स च सर्वप्रमाणगम्यः। तेनैव वनस्थदण्डस्य कारणत्वविरहेऽपि दण्डत्वजातिसिद्धिः जातिश्च तत्तद्व्यक्तिग्राहकप्रमाणेनैव ज्ञायते। व्यक्तीनामानन्त्ये विनाशित्वेऽपि तत्समवेता जातिरेका नित्या च।

सामान्यानङ्गीकर्तृसौगताभिप्रायमुद्घाटयति **अत्रेति**। पुद्गलपुञ्जरूपघटादिव्यक्तिषु येयं जातिर्मन्यते सा तेनैव साकमुत्पन्ना? कुतश्चिदागता वा? अंशेनागता, व्यापिका वा? न कथमपि युज्यते इत्याह **उत्पन्न इति**। व्यसनसन्ततिः अनुपपत्तिपरम्परा। तन्मतं एकत्वाद्व्यापकत्वाङ्गीकारेण खण्डयति **तन्नेति**। अभिभवात् प्रतिबन्धात्। वनत्वमुपाधिर्नजातिरिति सिद्धान्तं स्पष्टयति **वनत्वमिति**। दूरत्वस्य संनिकर्षवत्सामग्रीत्वं नोपपद्यते, दोषत्वेन विसामग्रीत्वात् उपाधित्वमपि तस्य किंस्वरूपमिति चेदाह **स चैकदेशस्थवृद्धवृक्षत्वमिति**। वनत्ववदेव राशित्व-सेनात्व-पङ्क्तित्व-कुलत्व-यूथत्व-समाजत्वानामुपाधीनां स्वरूपं दर्शयति **राशित्वं तु इति**।

विप्रत्वक्षत्रियत्वादिकं तु नोपाधिः, जातिरूपमेव तदवश्याङ्गीकरणीयमिति सिद्धान्तसिद्धये तल्लक्षयति **विप्रत्वादिकं तु इति**। 'स्वाध्यायोऽध्येतव्य' इति विध्यनुसारेण वेदाध्ययनाध्यापनादिकर्तृत्वं-

उपाधिस्वरूपं नोपपद्यते तादृशक्षत्रिये तथा 'स्त्रीशूद्रौ नाधीयाताम्' इति निषेधेऽपि उत्पथवर्तिविप्राध्यापनादध्ययनकर्तृशूद्रादावतिप्रसङ्गात्। अध्ययनाधिष्ठितत्वे 'वसन्ते ब्राह्मणोऽग्नीनादधीत' 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिविधिषु प्रत्यक्षविषय इति आचार्याणामभिप्रायः।

जातेश्चाक्षुषत्वे धर्मशास्त्रमननुकूलमिति मतमुपन्यस्यति **केचित्तु इति**। क्षत्रियादिसंवलिते क्षत्रियादिमिश्रिते विप्रे मूर्धावसिक्तादौ विप्रत्वजातिः चक्षुषा न प्रत्यभिज्ञायते। स्मृत्यर्थं विवृणोति **विप्रेणेति**। विप्रेणोढा क्षत्रिया मूर्धावसिक्तं, वैश्या-अम्बष्ठं, शूद्रा-पारसवं सूते। स्त्रीपरम्परया विप्रोद्वाहे क्रमेण पंचमे, षष्ठे सप्तमे युगे शुद्धविप्रो भवति। एवं क्षत्रोढा वैश्या-माहिष्यं, शूद्रा-उग्रं सूते। तथैव पंचमे षष्ठे च युगे क्षत्रियो भवति तथा वैश्योढा शूद्रा करणं प्रसूते। तथैव पंचमे युगे स शुद्धवैश्यो जायते। एवमनुलोमजवत् व्यत्यये प्रतिलोमजसन्ततिष्वपि जात्युत्कर्षवदपकर्षो ज्ञेय इत्यर्थः। व्यत्यये इत्यस्य कर्मव्यत्यय इति केचित्। तथा पंचमे युगे सति षष्ठे, षष्ठे सति सप्तमे जात्युत्कर्ष इत्यपि मतं नोपपन्नं, सतिशब्दाध्याहारापत्तेः। प्रतिलोमजाः असन्तः अनुलोमजा सन्तः, कर्मणां व्यत्ययेऽपि अधरोत्तरं साम्यं तथैव ज्ञेयमिति भावः।

एवं जातीनामुत्कर्षापकर्षवतीनामधरोत्तरत्वात् प्रयाजानुयाजादिवत् जातयः शास्त्रगम्या एव। मिताक्षरटीकाकृतां विज्ञानेश्वराणामपि चान्येषां निबन्धकाराणामप्ययमेवाभिप्रायः। तथापि भट्टपादानां गोत्ववद्ब्राह्मण्यमपि चक्षुर्गम्यमेव। तद्व्यञ्जकं ब्राह्मणजन्यत्वमिति अभिमतम्। व्याकरणस्मृतिर्यथा लोकसिद्धभाषान्तर्गतशब्दानां साधुत्वासाधुत्वे ज्ञापयन्ती अनुवादिका तथैव पूर्वोक्तस्मृतिरप्यनुवादिका न शास्त्रमूला। जन्यजनकयोः ब्राह्मण्यज्ञानस्य कारणत्वे बीजाङ्कुरन्यायेन स्वग्रहसापेक्षग्रहकत्वादात्माश्रयः। ब्राह्मण्ये विशुद्धमातापितृजन्यत्वज्ञानं व्यञ्जकमित्यभ्युपगमेऽपि तत्प्रत्यक्षत्वे व्यञ्जकस्य शास्त्रगम्यत्वं न बाधकम्।

मातापित्रोः 'अनिन्द्येषु विवाहेषु' 'विन्नास्वेष विधिः स्मृतः' इत्यादिवचनैः ऊढत्वेन विशुद्धत्वं सूचितं तथापि ब्राह्मण्यं तद्विनापि सन्ततौ सजातीयोत्पन्नायां गोवत् सिध्यति। अन्यथा व्यभिचारजन्यकुण्डगोलकयोः श्राद्धीयब्राह्मणान्तर्भावनिषेधो व्यर्थः स्यात्। प्रसक्त्यभावे वचनयोस्त्वन्यथैवोपपत्तिः।

यथा दण्डिविशिष्टबोधे दण्डो हेतुर्न दण्डित्वं, अतो विशिष्टबोधे तस्य न निर्विकल्पकं तथा ब्राह्मण्यविशिष्टब्राह्मणज्ञाने ब्राह्मण्यं न हेतुः किन्तु विशुद्धमातापितृजन्यत्वज्ञानमेव। तेनब्राह्मणत्वस्य न निर्विकल्पकज्ञानमिति केषाचिन्मतं परे खण्डयन्ति **इतरेति**। विशेषणधियमन्तरा विशिष्टधीर्नोचिताऽतो विशुद्धमातापितृजन्यत्वज्ञानेन विशेषणीभूतब्राह्मणत्वनिर्विकल्पकमावश्यकं, न तद्विना साक्षाद्विशिष्टधीः। अन्यथा दण्डिमानिति बोधे दण्डधीर्न कारणं साक्षात् दण्डिधीरेव कारणं स्यात्।

विश्वामित्रादिमुनिषु तपःप्रतापितत्रैलोक्येषु शुनःशेपत्रिशंकूद्धारादिसर्वकार्यसिद्धिर्यद्यपि ब्राह्मण्यप्रयुक्ता तथापि न ब्राह्मण्यम्। ब्राह्मण्यमेवेत्यन्ये। तथापि तत्सन्ततौ निर्विवादं ब्राह्मण्यम्। तयोः-परम्पराप्राप्त तपःसंपादित ब्राह्मण्ययोः ब्राह्मण्यानि विजातीयानीति केषांचिन्मतम्। सिद्धान्ते एकशक्तिमत्स्वरूपैककारणतावच्छेदकत्वान्न ब्राह्मण्ये भेद इति।

## उदयनाचार्योक्तजातिबाधकानि

**द्रव्यकिरणावल्यामुदयनाचार्यैर्**निर्दिष्टजातिबाधकान्याह **व्यक्तेररिति**। व्यक्तेरभेदः-स्वाश्रयनिष्ठ-

स्वाश्रयप्रतियोगिकभेदसामान्याभावः, आकाशत्वादेर्जातित्वे बाधकः । तुल्यत्वं तुल्यव्यक्तिवृत्ति-वृत्तित्वं स्वव्याप्यत्वस्वापकत्वस्वभिन्नत्वैतत्त्रितयसम्बन्धेन जातिविशिष्टत्वं, घटत्वकलशत्वादीनां जातिभेदे बाधकम् । तथा च घटत्वकलशत्वयोरैक्येन न घटत्वस्य तुल्यव्यक्तिकत्वप्रसक्तिः' कम्बुग्रीवादिमत्त्वस्य स्वभिन्नघटत्वादिजात्या सह निरुक्त तुल्यव्यक्तिकत्वेन न तस्य जातित्वमिति । एवं च कम्बुग्रीवादिमत्त्वं न जातिः स्वभिन्नजातिसमनियतत्वात् यद्यत्स्वभिन्नजातिसमनियतं तन्न जातिः द्रव्यत्वसमनियतपृथिव्यादिमनोऽन्तान्यतमत्ववदित्यनुमानात् कम्बुग्रीवादिमत्त्वस्य जातित्वाभावसिद्धौ तत्र लिङ्गज्ञानविधया तुल्यव्यक्तित्वज्ञानस्य हेतुतया एतस्यापि जातित्वज्ञानप्रतिबन्धकज्ञानजनकत्वेन गौणप्रति-बन्धकत्वात्, तदभावव्याप्यवत्तानिश्चयत्वेन मुख्यप्रतिबन्धकत्वाच्च तद्विषयतुल्यव्यक्तिकत्वस्य निरुक्तजाति-बाधकत्वमुपपद्यते । परं संकरस्य जातिदूषकताबीजं किमिति प्रश्न आह **तस्येति** । स्वसामानाधिकरस्वा-भावसमानाधिकरण्योभयसंबन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभाव इति नियमस्य भङ्गप्रसंग एव दूषकताबीजं, तदेवाह **नन्विति** । जातिव्याप्यत्वे सति जातिव्यापकत्वं परापरत्वम् । पृथिवीत्वव्यापकद्रव्यत्वादौ । समानाधिकरण्यसंबन्धेन द्रव्यत्वविशिष्टे पृथिवीत्वादौ द्रव्यत्वसमाना-धिकरणाभावप्रतियोगित्वस्यैव द्व्यभिचारवाणाय स्वाभावसामानाधिकरण्यप्रवेशः । जलत्वाद्यभाव-समानाधिकरणे तत्रैव जलत्वसमानाधिकरणाभावप्रतियोगित्वस्यैव सत्त्वात्तद्दोषतादवस्थ्यमतः स्वसा-मानाधिकरण्यप्रवेशः । परापरत्वाभावे विरुद्धयोरपि भूतत्वमूर्तत्वजात्योरेकत्र समवायापत्तिः नियमभंगश्च बाधकः । तेन तयोर्नजातित्वं, तत्राह **यथादर्शनमिति** । तादृशनियमे मानाभावात् भवन्मते जात्योः परापरत्वमते । व्यक्तिषु जात्यस्वीकारेऽनुगतप्रतीतिरपि बाधिका ।

आकृत्यैकार्थसमवायिद्रव्यत्वमेव घटत्वमिति मतमाह **५.३ इति** । संस्थानविशेषस्य जातित्वे संकर एव बाधक इत्याशङ्कां निरस्यति **तेषामिति** । अन्यतरकर्मजोभयकर्मजतद्भिन्नसंयोगानां भिन्नत्वात्, तन्मतं खण्यति **पटत्वादीनामिति** । इष्टापत्तौ घटत्ववत् पटत्वस्यापि आकृतिघटितजातिलक्षणाङ्गीकारे, सूत्रविरोधः तत्राकृतेर्जातिभिन्नपदार्थोपदेशात् । संयोगमात्रे पटजनकत्वावच्छेदकत्वरूपं जातेरसंभवात् । मिथस्त्वस्य परस्परत्वस्योभयवृत्तित्वेनानेकत्वात् । लाघवात्तादृशपटत्वाद्यवच्छेदेन सामानाधिकरण्या-भावश्चेत्तत्त्वस्य पटत्वादेरेकस्याभावः । ननु यदि जातित्वस्यावच्छेदकत्वावच्छेदेन समानाधिकरण्याभावो नाङ्गीक्रियते तदा व्याप्यतावच्छेदका कान्यनन्तानि भवेयुरित्याशङ्कते **नन्विति** । तदा धूमत्वालोकत्वा-द्यनेकव्याप्यतावच्छेकानि हित्वोपाधिरूपं वह्नित्वसमाधिकरणाभाववद्वृत्तित्वमेव व्याप्यतावच्छेदकं स्यात् तथाचोपाधिसंकरः उपसंहरति **तस्मादिति** ।

अनवस्था जातेर्जातिमत्त्वे । यद्यपि निखिलजातिषु एकवैजात्यङ्गीकारोपि तद्वैजात्ये न वैजात्या-न्तरमेकव्यक्तिवृत्तित्वात्तथापि निखिलजातिष्वेकवैजात्य तद्वैजात्यतदाश्रयजातिषु पुनर्वैजात्यमेवमत्राऽपि इत्यनवस्था बोध्या ।

विशेषपदार्थेषु जातिस्वीकारे निःसामान्यगर्भलक्षणव्याघातोऽथवा जात्या व्यावर्तकत्वे स्वतो-व्यावर्तकत्वरूपस्य हानिः स्यादिति स्पष्टयति **तार्किकेति** । गुणत्वे विशेषाणां तदन्तर्भावः, न पदार्था-न्तरत्वं स्यात् ।

एवमांशिकताऽपि जातिबाधिकेति शेषः । जात्योरांशिकतामुदाहरणेन स्पष्टयति **यथेति** । 'पर्वतो वह्निमान्' इत्येकस्मिन् ज्ञाने न प्रत्यक्षत्वं, नाप्यनुमितित्वं उभयोरङ्गीकारे चांशिकत्वापत्तिः ।

द्विविधत्वाङ्गीकारे तदुपपत्तिरिति सिद्धान्तमाह **वस्तुतस्तु इति**। इदमंशे प्रमा रजतांशे भ्रम इति विधाद्वयस्वीकारे यथा नांशिकत्वमेवमत्रापि। प्रत्यक्षानुमितित्वे द्वे जाती, तयोः भ्रमप्रमात्वयोरुपाधित्वं इत्याशंकायामाह **इति त्वप्रयोजकम्**। प्रत्यभिज्ञायां ग्रहणस्मरणांशद्वयसत्त्वेऽपि जातित्वात्। ननु प्रत्यभिज्ञायामंशद्वयसत्त्वान्न जातित्वं किन्तु विलक्षणमेवेदं ज्ञानं, समवेतत्वे सति, असमवेतत्वे वा सत्यनुगतमित्युच्यते तदाह **तत इति**। तेन नांशिकत्वापत्तिरित्यर्थः।

ननु 'पर्वतो वह्निमान्' इति ज्ञाने प्रत्यक्षस्य व्यवसायज्ञानमेव नानुव्यवसायोऽनुमितिसामग्र्या बलवत्त्वेनानुमितिरेव भवति। प्रत्यक्षस्यापूर्णत्वादनुमितेरेवानुव्यवसाय इति चेदाह **तन्नेति**। प्रत्यक्षानुमित्योः प्रतिवध्यप्रतिबन्धकभावस्यानियतत्वान्नानाप्रतिबन्धकानि कल्प्यानि तत्र। ननु अननुगतत्वादनुव्यवसायज्ञानानां कादाचित्कत्वाच्चान्यत्र प्रतिबन्धकवैविध्यमस्तु; अत्र त्वनुमितिसामग्री प्रतिबन्धिका प्रत्यक्षं च प्रतिवध्यं इति चेदाह कादाचित्के प्रत्यक्षानुव्यवसायेऽनुमितिसामाग्राहचाः सर्वदा प्रतिबन्धकत्वकल्पना नोपपन्ना।

अदृष्टवादी शङ्कते **द्वयसामग्रीसत्त्व इति**। विषयेन्द्रियसंनिकर्षव्याप्तिग्रहादिसामग्र्युपस्थितौ। तत्कार्ययोः—स्पर्शसौरभादि प्रत्यक्षयोर्व्यवस्थायां क्रमनिश्चयार्थं प्रतिवध्यप्रतिबन्धककल्पनायाम्। **यथा वेति**। यत्रानुमाने नेष्टसाधनत्वबोधः शब्देन च कृतिसाध्यत्वज्ञानं च समानविषये जायते तत्रोभयोर्मध्ये किं विशेष्यं किं च विशेषणमिति समस्यायां को निर्णायकः? विलक्षणमदृष्टमेव तत्र व्यवस्थापकं, अथवाऽऽत्ममनःसंयोगो वा तादृङ्नियामको नान्यस्तथा इहापि आंशिकस्थलेषु न प्रत्यक्षादीनां कारणता किन्त्वदृष्टादेरेवेति चेदाह **नेति**। प्रत्यक्षादीनां कारणतां सार्वजनीनप्रतीतिसिद्धामपलप्य अदृष्टमात्रस्य विषयेन्द्रियसंनिकर्षशून्यकेवलात्ममनः संयोगस्य वा कारणत्वं नोपपन्नमित्याह **यथेति**। चाक्षुषादिसामग्रीप्राबल्यदौर्बल्यविवादे तु नियतकार्यानुभव एव शरणम्। उच्छृङ्खलानामापाततो विचारशीलानां ज्ञानमात्रे आत्ममनोयोगः, कार्यमात्रेऽसमवायिकारणत्वकल्पना न प्रमाणसिद्धेति मतमुल्लिखति **उच्छृंखलास्तु इति**। असमवाय्यभावेऽपि समवायिनिमित्ताभ्यामेव कार्योत्पत्तिसिद्धेरिति भावः। केचित्तु आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततोऽर्थज्ञानमिति प्रक्रियायां इन्द्रियमनोयोगस्य नापेक्षा, प्रमाणाभावात्। तत्कार्यमात्ममनोयोगे वैलक्षण्यस्वीकारेणैव सिध्यति। इन्द्रियमनोयोगाभावे सुषुप्तौ अनुव्यवसायापत्तिरिति चेत्तत्राह **तादृशेति**। तथैव कार्यमात्रेऽदृष्टस्य कारणत्वस्वीकारेऽपि न प्रमाणम्। विहितक्रियाजन्यो धर्मः निषिद्धक्रियाजन्योऽधर्मश्चादृष्टम्। जगति सुखदुःखे तज्जनककार्याणि च सर्वाणि न वेदादिविहितक्रियोत्पन्नानि किन्तु कानिचित्प्रातिस्विकान्येवाग्निहोत्रब्रह्मवधादिजन्यानि। तैरेवादृष्टकारणकसुखदुःखव्यवहारः। अवशिष्टानि तु दृष्टसामग्रीजन्यान्येवेति विवेकः।

**इति श्रीभट्टनीलकण्ठभट्टप्रणीतभाट्टार्कव्याख्यायामर्कमाधुर्यां अनन्तत्र्यंबकशास्त्रिकृतौ सामान्यनिरूपणम्॥**

---

## शक्त्यधिकारः

प्रतिबन्धकमण्योपधिमन्त्रसमवहितेन वह्निना दाहो न जन्यते, तच्छून्येन तु जन्यते। तत्र वह्न्यादिना जायमाने दाहकार्ये कारणीभूता वह्निशक्तिः, सा च मण्यादिना नाश्यते, उत्तेजकेन मण्याद्यपसारणेन वा जन्यते। ननु दाहं प्रति मण्यभावत्वेन हेतुत्वकल्पनान्न मणिसमवधानकाले दाहापत्तिरिति चेन्न; मण्यभावत्वेन रूपेण स्वतन्त्रहेतुताकल्पने गौरवात्। विलक्षणशक्तिमत्त्वेन वह्नेः कारणत्वकल्पनस्यैवोचितत्वात्।

एवमनुमानमप्यत्र प्रमाणम्। तथाहि, वह्निर्दाहानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वाददृष्टवदात्मवदिति। वह्निद्व्यणुकत्वमादाय, भर्जनकपालस्थवह्निनिष्ठानुद्भूतरूपमादाय वा सिद्धसाधनवारणाय साध्ये दाहानुकूलेति। वह्निद्व्यणुकेन्धनसंयोगमादायादृष्टवदात्मसंयोगमादाय वा तद्वारणायाद्विष्ठेति। वह्निनिष्ठोष्णस्पर्शमादाय तद्वारणायातीन्द्रियेति। यद्यप्यत्रात्मनो दृष्टान्तत्वमसंगतं तस्य दाहजनकत्वे मानाभावात्। तथापि कार्यमात्रे कर्तुरेव कारणत्वमताभिप्रायेणैवमुक्तम्। यद्वा दाहजनकत्वमत्र न दाहकारणत्वमपि तु दाहप्रयोजकत्वं तच्च कारणतत्कारणसाधारणं स्वरूपसंबन्धरूपमिति कार्यमात्रकारणकृतिकारणात्मन्यप्यक्षतदेवेति ध्येयम्। न चाप्रयोजकत्वमत्र शङ्क्यम्; दाहवह्न्योः कार्यकारणभावस्यैवानुकूलतर्कत्वात्। शक्तिः शक्तात्पृथङ् नास्ति।

एतत्सर्वं मनसि कृत्य ग्रन्थकार आह **शक्तिरपीति**। वह्निं प्रति तृणफूत्कारसंयोगादीनां तृणफूत्कार संयोगत्वादिरूपेण कारणताया व्यभिचारेणासंभवादतिरिक्तशक्तिसिद्धिः। न च संबन्धत्रयस्य वह्निवृत्तिवैजात्यत्रयं कल्प्यमिति न व्यभिचार इति वाच्यम् लघुत्वात्। तज्जन्यतावच्छेदकवैजात्यत्रयकल्पनामपेक्ष्य तत्तत्संबन्धानामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघुत्वेन न्याय्यत्वात्। न च तत्तत्संबन्धसाधारण्येनैकजातेरभ्युपगमः, योग्यवृत्तिजातेर्योग्यत्वापत्तेः। यदि 'व्यापारेण व्यापारिणो नान्यथासिद्धि'रिति नियमेन तृणादेरपि कारणता तर्हि आह **तदेति**। सर्वत्र कारणेषु दण्डादिषु कारणता शक्तेरेव, कारणतावच्छेदकं दण्डत्वाद्येव, तृणारण्यादिषु यद्यपि शक्तिरेका तथापि तदवच्छेदकं नैकं। अपि तु विभिन्नानि तृणादीनि, तत्रावच्छेदकशक्त्यन्तरं, शक्तित्वं वेति मतानि।

नन्वत्र तर्हि यावन्ति कारणानि तावत्यः शक्तय इति नामान्तरमात्रं, न लाघवलेशोऽपीति चेत्तत्राह **अत्रेति**। अनेककारणविभागयुक्तदर्शादिषु एकमात्रशक्तितदवच्छेदककल्पनायामत्यन्तं लाघवम्। तथैव सर्वत्र कारणेषु।

ननु तथापि एकस्या शक्तेरनन्तावच्छेदकत्वे तत्तदवच्छेदकावच्छिन्नशक्तीनामप्यनन्तत्वात्कथं लाघवमिति चेदाह **आकाशपदशक्तेरिवेति**। ननु अनन्यथासिद्धनियतपूर्ववर्तित्वादीनां शक्तिव्यञ्जकत्वे प्रतिव्यक्तिभिन्नानां तेषामनन्तत्वात्तत्र च कारणत्वावश्यकत्वात् दोषतादवस्थ्यमिति चेदाह **नेति**। व्यञ्जकं अनन्यसिद्धत्वादिज्ञानं प्रत्यक्षसिद्धं तत्र न शक्तिर्न च कारणता किन्तु धूमज्ञानशक्तेर्यथा वह्निज्ञानकारणता तथा समूहालम्बनात्मानन्नानन्यथासिद्धत्वादिभाननिष्ठशक्तेरेव कारणतेति **सर्वमनवद्यम्'**।

यद्यपि शक्त्यवच्छेदकानि प्रतिकारणं भिन्नानि दण्डत्वादीनि तथापि सर्वकारणेषु एककार्य-निरूपिता शक्तिरभिन्नैव । तस्याश्चावच्छेदकावच्छिन्नसकलकारणसमवधानमुत्पत्तौ अपेक्षितमिति नव्यमतम् तच्च समवसकलकारणासमवधानेऽपि कार्योत्पत्तिदर्शनादाहुरित्यस्वरसः ।

दण्डत्वघटत्वयोः पारिभाषिकं कारणकार्यतावच्छेदकत्वकल्पनं शक्त्यङ्गीकारेणैव निरस्तम् ।

'व्रीहीन्प्रोक्षति' इत्यत्र प्रोक्षणक्रियाजन्यफलशालित्वरूपं कर्मत्वं व्रीहीणां द्वितीयाश्रुत्याऽव-गम्यते । क्रियाजन्यफलं च चतुष्प्रकारकं, उत्पाद्याप्यविकार्यसंकार्यस्वरूपम् प्रोक्षणेन आद्यत्रितयासंभवात् चतुर्थं संस्कार्यमेवावशिष्यते । स च संस्कारः शक्तिरेव, द्रव्यगुणक्रियाद्यसंभवेन परिशेषात् इत्याह **स एवेति** । व्रीहीनिति द्वितीयाश्रुत्या प्रोक्षणभाव्याः व्रीहय एव संबध्यन्ते नात्माऽपूर्वं वा । तत्सूचकपदा भावात् । तेन न तस्यात्मगुणत्वाशङ्का ।

कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकम् । यथा अवघातप्रोक्षणादि । तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशया-गादि । तच्च संनिपत्योपकारकं द्विविधं, उपयोक्ष्यमाणार्थं उपयुक्तार्थं चेति । तत्रावघातप्रोक्षणादि उपयोक्ष्यमाणार्थं व्रीहीणामुपयोक्ष्यमाणत्वात् । प्रतिपत्तिकर्म इडाभक्षणादि उपयुक्तपुरोडाशसंस्कारकम् । तच्च त्रिविधं संनिपत्योपकारकमारादुपकारकाद्बलीयः अदृष्टार्थत्वाविशेषेऽपि । संनिपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्रीहिप्रोक्षणयोः संबन्धो वाक्यक्लृप्त, उपकारमात्रं तु कल्प्यम् । आरादुपका-रकस्थले हि प्रकरणं विनियोजकम् । व्रीहिपदेनापूर्वसाधने लक्षणां कृत्वा कृतौ वाक्यं विनियोजकमिति बलीयस्त्वम् न हि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणं तदर्थं भवति, तत्स्वरूपे आनर्थक्यात् । किन्तु तत्संस्कारद्वारा क्रत्वर्थमेव । तत्रापि संनिपत्योपकारकाणां द्रव्यदेवतासंस्कारद्वारा यागस्वरूपोपयोगा-दुत्पत्त्यपूर्वार्थित्वम् ।

व्रीहिपदेन लक्षणां कृत्वा कृतौ वाक्यं विनियोजकमिति यत्तात्पर्यरूपेणोक्तं तदेव क्रमशः विवृणोति **तेषामिति** । साधनता अपूर्वस्य, यदि व्रीहिस्वरूपैव तदा तद्दोषतादवस्त्यम् । अतिरिक्ताऽ-पूर्वसाधनता शक्त्यां न सिध्यतीत्याह **न त्विति** । अपूर्वस्येष्टत्वेऽपि तस्यापूर्वस्वरूपेणेष्टत्वविरहात् फलसाधनता च लक्षणया तात्पर्यानुपपत्त्या कल्प्यते । ननु प्रोक्षणाश्रयजलसंयोगानुयोगित्वसंबन्धेनैव व्रीहीणां भाव्यत्वमिति न लक्षणापेक्षेति चेदाह **नेति** । तदभावेन-तादृशसंबन्धविरहेणाभावत्वरूपशास्त्र-तात्पर्यानुपपत्तेः । कर्माङ्गावघाताङ्गप्रोक्षणत्वेनैव संनिपत्योपकारकत्वं, तेन तज्जन्यापूर्वत्वेनैव फलसाध-नतोह्या । तदपूर्वं च क्रिया यत्र, तत्रैव नात्मनि तेन नात्मगुणः । न च क्रिया व्रीहिगतेति व्रीहिगुण एवास्तु न शक्तिरूपपदार्थान्तरमिति वाच्यम्; गुणस्य यावदाश्रयभावित्वेन यत्किंचिद्व्रीहिव्यक्तिनाशे नाशापत्तेः । न च प्रतिव्यक्तिगुणकल्पना युक्ता, महद्गौरवप्रसङ्गात् ।

किं चापूर्वस्य न गुणत्वं, अप्रत्यक्षत्वेन तादृशव्यवहाराभावात् न प्रमाणं तत्र । शक्तित्वे किं प्रमाणमिति चेदाह **शक्तित्व इति** । इयं शक्तिः 'सुन्दर्याः पादप्रहारेणाशोकवृक्षस्य पुष्पोद्गमो जायते' इति कविसमयवत् न भावनाभाव्याऽपि तु प्रत्यक्षप्रमाणगम्येति दर्शयितुमाह—**तां किं न पश्यसि ? इति** । केषुचिदेव पुष्पेषु लाक्षारससेके कृते सुदूरान्तरस्थितेषु पुष्पेषु शक्तिद्वारा परिणामो जायते, तान्यरूपाणानि भूत्वा वृक्षविस्तरः प्रत्यब्दं अरुणछत्रयुतोऽनुभूयते । अधुनाऽपि सूचीद्वारौषधसेके शक्तिद्वारैव शरीररोग-नाशः प्रत्यक्षीक्रियते इति सर्वजनीयम् । मृदपि मन्त्रशक्तिप्रभावेण विमोहिनी भवतीति आह

**मृदमपीति**। ननु रक्तपुष्पजनिका शक्तिः सेकजन्यपाकेनैव कल्प्याऽन्यथाऽसिक्तेषु परमाणुषु रक्तत्वासंभव इति चेन्न; सिक्तपरमाणुसंबन्धेनैव तत्संभवात्। न हि पाको लाक्षासेकसहकारीति प्रमाणसिद्धम्।

रागः अन्वयव्यतिरेकसिद्धसेककल्प्यशक्तेरेव परिणामः, न पाकजः; तस्य विशेषगुणत्वेनाऽपाकजत्वात्।

यथाऽत्यन्ताभावे कालविशेषविशिष्टस्तद्रूपस्य संसर्गत्वोपगमादेव घटवति घटो नास्तीति प्रतीत्यभावोपपत्तिः तथा सेकोत्तरं कालविशेषनियता प्रत्यक्षजनिका शक्तिः पुष्पस्यैवेति **परे**।

मन्त्रशक्तिं विवृणोति—**सार्वजनीनेति**। शक्तिः प्रतिबन्धिकेति शेषः। ननु प्रतिबन्धकाभावस्य यथा कारणत्वं तथाऽभिमन्त्रणध्वंस एव कार्यहेतुः शक्तिकल्पने गौरवादिति चेन्न; तथा सति स्वर्गादौ दुष्कृतजन्यापूर्वध्वंसः, नरकादौ च सुकृतजन्यापूर्वध्वंस एव कारणं स्यान्नापूर्वम्। तथा च शास्त्रानर्थक्यमिति भावः।

मन्त्राधिष्ठितदेवताप्रसादरोषादिसमर्थकानामुपासकानां मतेन शङ्कते **यत्तु इति**। अलौकिकमन्त्रदेवता-तत्तोषतद्रोष-तत्संनिधान-तत्संचाराद्यपेक्ष्य शक्तिकल्पना लघीयसी। अपि च देवतासंनिधानं मूर्तिधारणं विना न संभवति। मन्त्रोच्चारणमात्रे कृतेऽनेकविधदेशेषु त्रिविधकालेषु मूर्तिरूपेण संनिधानं-अनेकोपासकानां कृते काव्यव्यूहकल्पनां विना नोपपन्नं; तादृशी कल्पना च गरीयसी स्यात्। ननु मन्त्ररूपत्वाद्देवतायाः मन्त्रोच्चारणेनैव संनिधानं न कायव्यूहापेक्षेति चेन्न; देशकालान्तरितत्वात् प्रतिसन्धानासंभवतः। देवतायास्तादृशशक्तिकल्पनापेक्षया प्रत्यक्षभस्मादौ तत्कल्पनैवोचिता।

उत्तेजकाभावविशिष्टमणिसमवधाने दाहो न जायतेऽन्यथा जायते इत्यनेकनाशोत्पत्तिकल्पनापेक्षया एकशक्तिकल्पने **फलमुखं गौरवम्**। अपि च 'पयसा जुहोति' 'दध्ना जुहोति' व्रीहिभिर्यवैर्वा इत्यादौ अनेकादृष्टजनकविजातीयानेकयागहोमादिकल्पनं शक्त्यभावे गौरवावहमनुपपन्नं च समुच्चयकल्पने च तत्तत्कालनियत चतुर्दशत्रयोदशाहुति व्यवस्थापक वचन बाधः, तथा यवधर्माः समुच्चयेन व्रीहिषु कृताश्चेत्सर्वमसमञ्जसं स्यात्। नियामकशक्तिस्वीकारे च न दोषः इति फलमुखगौरवे फलम्।

आद्या सहजा स्वाभाविकी शक्तिः घटादौ जलहरणकार्ययोग्या। मन्त्रशक्तिः शाब्दी। अन्त्या आधेया व्रीह्यादिनिष्ठा प्रोक्षणादिसंस्कारनिर्मिता। अनयाधेयशक्त्यैव प्रतिष्ठाविधिजन्यभगवत्प्रतिमासंस्कारः स्वामित्वापादनं दाने, सपिण्डोत्पत्तिमृतिजन्याशौचनाशः तत्तद्विधिजन्या पूर्वाणि फलजनकानि भवन्ति। एवं यज्ञपात्रताम्रपात्रादीनां शुद्धिरपि कर्मयोग्यतासंपादिकाऽनया शक्त्यैव सिध्यति। सर्वाणि विधिवचनानि एतादृशाधेयशक्तिसंपादनद्वारैवापूर्वद्वारा फलसंपादकानि। शुद्धत्वं अशुद्धिजनकशक्तिनाशेन धर्मकृत्ययोग्यत्वम्। तदेव भट्टपादवचनेन स्पष्टयति—**तथा चेति**। प्रायश्चित्तविधिजन्यपापनाशः, अशौचाख्यशक्तिनाशेन अशुचित्वाख्यशक्तिनाशेन धर्मकर्मयोग्यता च शुद्धिः।

**इति श्रीभट्टनीलकण्ठप्रणीतभाट्टार्कव्याख्यायां अर्कमाधुर्यां अनन्तत्र्यंबकशास्त्रिकृतौ शक्तिवादः॥**

---

## संख्याधिकारः

संख्यापदार्थं लक्षयति—**सा चेति**। गणितव्यवहारस्य संख्यां विनाऽसिद्धेः तदसाधारणकारणं संख्येति लक्षणम्। तथापि संख्यासिद्धिं विना गणनव्यवहारस्य, गणनव्यवहारं विना संख्यायाश्चासिद्धिरिति परस्पराश्रयत्वम्। संख्याया: संख्येयस्वरूपत्वं शङ्कते **एकत्वादिप्रत्यय इति**। द्रव्यस्वरूपत्वोक्तौ अतिरिक्तसंख्यापलापप्रसङ्गः। तथापि पृच्छ्यते तत् घटादिस्वरूपं घटव्यक्तिर्घटत्वजातिर्वा? इति। अन्त्ये घटत्वजातिरूपं एकत्वं न पटादौ। तथापि सामान्यात्मकमेवैकत्वं, तस्य घट इव पटेपि सत्त्वान्न दोषः इति चेन्न; द्विबहुष्वपि एकत्वप्रतीत्यापत्तेः। सत्तातिरिक्तजातित्वं सामान्यभावादिष्वपि प्रत्ययान्न युज्यतेऽत उपसंहरति **तेनेति**। संख्यैवैकत्वं संख्येयस्वरूपमित्यर्थः। द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः। एकत्वान्यसंख्यामात्रमपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थः। असमवायिकारणं तु द्वित्वं प्रति समवायिकारणगतयावदेकत्वमिति बोध्यम्। एतदभिप्रायेणाह **द्वित्वंत्विति**। यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते तथापि 'एको द्वौ' इति प्रत्ययाभावात्, 'एको न द्वौ' इति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चित्संबन्धोऽनेकाश्रयोऽपेक्षाबुद्धावभ्युपेयते। तदेव साहित्यं निरुक्ति **अयमेक इति**। अत्राचार्यसंमतिमाह **यद्यपीति**। महासंख्यास्ववान्तरा एकत्वादि संख्याऽन्तर्भूताऽस्ति तथापि सा भेदेन न ज्ञापयति, तेन कर्म विशेषणं महासंख्यैव भवति नावान्तरा।

संख्या गुण एव न पदार्थान्तरमिति तार्किकमतं मण्डयति **केचित्तु इति**। गुणे गुणानङ्गीकारनियमः, संख्या चैकं शुक्लत्वमेका क्रियेति रूपेण गुणकर्मादिष्वपि व्यवहृतेनं गुण इति चेदाह **गुणेति**। स्वसमवायिसमवेतत्वसंबन्धेन तादृशव्यवहारस्यौपाधिकत्वमन्यथा परिमाणमपि पदार्थान्तरं स्यात् न गुणः। अस्तु तस्यापि पदार्थान्तरत्वमिति चेन्नेत्याह **गुणत्वजातेस्त्विति**।

सिद्धान्तमुपपादयति **वस्तुतस्तु इति**। एकार्थसंबन्धशङ्कां निराकरोति **घटादाविति**। गुणकर्मादौ संख्याप्रतीतिः एकाश्रयनिबन्धना यदि तत्र घटादौ तदप्रतीतिः स्याद्गुणादौ तत्प्रतीतिः कथम्? तेन तस्याः प्रतीते विलक्षणत्वप्रसङ्गः, पदार्थान्तरत्वे पृथक्तया 'एकं शुक्लत्वं' इति प्रतीतिः सूपपन्ना। अन्यथोपपादितां परिमाणस्य पदार्थान्तरत्वशङ्कां युक्त्या खण्डयति **यत्तु इति**। परिमाणस्याश्रयं विनाऽप्रतीतेः संख्यायास्तु तद्विनापि प्रतीतिः एकं शुक्लत्वमिति परिच्छेदतात्पर्यम्। पूर्वोक्तायाः एकमङ्गुलमितं शुक्लं तावच्च पत्तिमिति प्रतीतेः आश्रयं विनानुपपत्तेरौपाधिकत्वस्यौचित्यम्।

संख्यायाः पदार्थान्तरत्वाभ्युपगमे पदार्थाधिक्येन गौरवमिति शङ्कां निरस्यति **यत्तु इति**। प्रमाणप्रमितत्वं केवलसंख्यानुभवेन, अन्यथा तादृशानुभवस्योचितोपपत्तिर्न स्यात्। अपि च नात्र गौरवं प्रत्युत लाघवमेवेत्याह **वस्तुतस्तु इति**। संख्यात्वगुणत्वप्रभृत्यनेकव्याप्यव्यापकजातिकल्पनाप्रमाणसद्भावे भवति न तु तत्र प्रमाणमस्ति, तेनात्र संख्यात्वरूपैकजातिर्निनिका। ननु अनेकजातिस्वीकारे गौतममहर्षिवचनं प्रमाणमित्यत्राह **गुरुत्व इति**। 'रूपरसगन्धस्पर्शाः संख्या परिमाणानि

पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा' इति विभागसूत्रे महर्षिणा केवलं सप्तदश गुणाः प्रोक्ताः। गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः' सूत्रस्य त्वविरहान्न तत्र महर्षिव्यवहारः प्रमाणम्। तेन गुणत्वजातिर्न सावधिका प्रमाणसिद्धा।

अपि चान्येषां कणादगौतमप्रभृतिमहर्षीणामयं व्यवहारोऽस्तु यथाकथंचित्। पूर्वमीमांसक-जैमिनिमहर्षिव्यवहारस्तु एतद्विपरीतः। कथमेतदवगम्यते, किं च संख्यापृथक्त्वनिवेशेन फलमिति चेदाह **पृथक्त्वनिवेशादिति**। पृथक्पदार्थान्तराङ्गीकारेण कर्मगतसंख्यया कर्मभेदः स्पष्टतरः न कर्म-गतत्वेन। द्रव्यगतगुणत्वानङ्गीकारेण तद्गतसंख्यापदार्थयुक्तोदाहरणं च शबरस्वामिनां संगच्छते इत्याह **अत एवेति**। क्वचित् 'आरुण्या एकहायन्या गवा सोमं क्रीणाती'त्यादौ संख्यायाः गुणत्वव्यवहारस्तु अङ्गत्वदर्शकः। संस्कारोऽपि क्वचित्तथैव स्मृतिहेतुरिति, नेति च वैमत्यं दर्शयति स्मृतिहेतुरिति।

**इति भाट्टार्कव्याख्यायामर्कमाधुर्यां संख्यानिरूपणम् ॥**

---

# विषयताधिकारः

ननु भवतु ज्ञानं स्वप्रकाशं वा परप्रकाशं वा; तत्तु खलु केनचिद्विषयेण भवितव्यम्। विषयस्य ग्राह्यत्वं ज्ञानस्य ग्राहकत्वमिति विषयविषयिभावलक्षणः संबन्धो न शक्यापह्नवः, ज्ञानस्य सविषयकत्व-नियमात्। अनयोश्च सम्बन्धो विषयताख्यः।

सा च विषयता किं ज्ञानविषययोः स्वरूपसंबन्धः? तथात्वेऽतीतानागतयोर्विषयत्वानुपपत्तिः, तयोरसत्त्वात्। अथ किंनिष्ठं तावत् विषयतानियामकम्। रूपं बाह्यं पारमार्थिकं, ज्ञानं चानित्यमिति येषां पक्षस्तेषां नैयायिकानां मते ज्ञाननिष्ठमेव तदङ्गीकर्तव्यम्। ये च साकारज्ञानवादिनस्तेषां सांख्य-वेदान्तिनां मते ग्राह्यनिष्ठमेव नियामकम्, अन्यथा ज्ञाननिष्ठत्वे सर्वदैव घटं जानामीत्यनुव्यवसाय-प्रसङ्गात्। स चानिष्टः, विषयभेदानुभवस्य स्फुटमुपलब्धेः।

न्यायमते तु ज्ञाननिष्ठो विषयविषयिभावः। स च "प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषः" **इत्युदयनाचार्यः**। तदीयता च ज्ञानीयता ज्ञानसंबन्धितेति यावत्। ज्ञानस्यैव स्वभाव-विशेषो विषयता। ज्ञानमुदयमानं विषयमुल्लिख्यैवोदयते, न कदापि विषयानुल्लेखि ज्ञानं संभवति। ईदृशश्च स्वाभाविकः सम्बन्धो न ज्ञानविषयोभयनिष्ठः, तदुभयस्वभावनिरूपित इत्यङ्गीकर्तुं शक्यम्, विषयस्यातीतानगतस्वरूपस्याविद्यमानत्वेऽपि तदुपलब्धेः। अतो ज्ञानस्वभावविषयविषयिभावः कक्षीकर्तव्यः। अथ स्वभाव इति कोऽर्थः? यदि स्वस्य भावो धर्मः स्वभावस्तदा ज्ञानस्य धर्मो घटत्वा-दीत्यभ्युपगम्यमान साकारज्ञानवादे प्रवेशापत्तिः। स्व एव भाव इति निरूप्यमाणे विषयस्य ज्ञानात्मनि प्रवेशाद् ज्ञानस्वभावानतिरेकाद्विज्ञानवादाङ्गीकारप्रसङ्गो दुराबाधः।

किं च, तदीयत्वं विषयसम्बन्धित्वं यदि ज्ञानस्यैव धर्मो भवेत्तर्हि 'घटो ज्ञानविषय' इत्यभिलापो नोपपद्यते, विषयतायाः ज्ञाननष्ठित्वादेव घटनिष्ठत्वाभावाच्च। अथ विषयस्यैव विषयतास्वभावः स्यात्तर्हि ज्ञानमनपेक्ष्यैव विषयग्रहणं प्रसज्येत। न वा ज्ञानविषयोभयनिष्ठः स्वरूपसम्बन्ध एव विषय-तेति मन्तव्यम्। तथात्वेऽयं पुरुषः किंचिज्जानाति, अयं च घट इति ज्ञानस्य घटस्य च ज्ञाने जाते तत्रायं घटं जानाति न वेति वस्तुतो घटज्ञानवति पुरुषे ज्ञायमाने संशयो न समुदीयान्, उभयोर्ज्ञान-घटयोः स्वरूपस्य ज्ञानात्। अथ तयोर्न संश्लिष्टतया ग्रहणं इति घटज्ञानस्वरूपयोर्ज्ञाने सत्यपि घटज्ञान-वानयमिति धीर्नोदेतीत्युच्येत, तदा विषयताख्यः सम्बन्धो न गृहीतः सत्यपि सम्बन्धस्वरूपग्रहणे इत्युक्त भवेद्भङ्ग्यन्तरेण। अतो विषयताख्यं धर्मान्तरमङ्गीकर्तव्यम्। अयमेव **रघुनाथशिरोमणिवत् भट्टपादा-नामपि** सिद्धान्तः। तन्मते विषयता पदार्थान्तरं, तद्विशेषाः प्रकारताविशेष्यतादयः तथैव व्याख्येयाः।

एतत्सर्वं मनसि कृत्वा **भट्टनीलकण्ठः** तद्विषयकवैमत्यं विवेचयति **विषयतेति**। **जरत्तार्किकाः** सप्तपदार्थवादिनः। अतिरिक्ता एकैव सा नित्या चेदापत्तिः परमतेन निरस्यते **एवमपि इति**। अतीत-घटस्य यतः स्मरणं भवति। अतस्तत्संस्कारेण तज्जातमिति संस्कारकल्पना फलबलकल्प्या तथातीत-घटज्ञानमुपपद्यते। अनागतज्ञानाय तन्नित्यत्वमावश्यकमित्यर्थः।

सप्तपदार्थवादिनां वैशेषिकाणां प्रसिद्धिमनुरुध्य तेषां ज्ञाने वा विषये वान्तर्भावः क्लिष्टकल्पनया न साधनीयः। न च सर्वसंबन्धानामन्ततो गत्वा स्वरूपसंबन्धे पर्यवसानात्, विषयताया अपि तथात्वात्, अतीतानागतयोः स्वरूपतोऽभावात्कथं विषयताख्यस्तयोः सम्बन्धो भवेत् इति शङ्कनीयम्, विषयतादीनां वृत्त्यनियामकसंबन्धत्वात् तस्य समकालिकसंबन्धिसत्तानपेक्षणात्। तादृशसंबन्धानङ्गीकारे स्वस्वामि भावादिव्यवहारो विसंस्थुलो जायेत। यदपि सांख्यवेदान्तमते विषयताया ज्ञाननिष्ठत्वे घटं जानामीति सार्वदिकानुव्यवसायप्रसक्तिः कृता, तदपि तेषां सिद्धान्तं विरुणद्धि। यदि नित्यचैतन्यवादिनां स्वरूपभूतं चैतन्यं विषयमवगाहते इति पक्षः सम्प्रतिपन्नः, वृत्तिज्ञानानामेव स्वविषयत्वाभ्युपगमात् वृत्तिरूपज्ञानानामन्तःकरण परिणामानां क्षणिकत्वमेव तैरास्थीयते, यथा नैयायिकानामात्मविशेष-गुणानामिति कः प्रतिविशेषः। वेदान्तिमते विषयताख्यः संबन्धोऽनिर्वचनीयस्तत्त्वान्यत्वाभ्यां-निरूपणानर्हत्वात् सांख्यानां च मते यद्यपि ज्ञानचैतन्ययोः सम्बन्धः प्रकाश्यप्रकाशकरूपः, तथापि कोष्ठगत्या तस्यौपचारिकत्वादाध्यासिकत्वमेव पर्यवस्यति।

अर्थोऽनुभवमन्तरेण न कश्चिददृष्टः, वेदनं चार्थं विना न दृष्टं संवेद्यमानम्। तस्मात्तयोरर्थ-तदुपलम्भयोर्विवेकिता नास्तीति ज्ञानविषययोरव्यतिरेकित्वं संप्रतिपन्नं भवेत्। अथोभयोः परस्पराविना-भावेन प्रतीतयोरपि नाभेदो जातिव्यक्तिवद् गुणद्रव्यवद्वा स्वरूपभेदेऽपि एकवित्तिवेद्यत्वं न त्वभेद इत्यास्थीयते, तदा ज्ञानमज्ञातं सदेव विषयस्य प्रकाशकमिति मतप्रतिष्ठापने कथमाग्रह्यते नैयायिकैः। विषयताख्यपदार्थान्तरस्वीकारेण तयोर्भेदो यद्यपि सूपपादस्तथापि तं परित्यज्य ज्ञानस्वरूपे विषयता-मन्तर्भावयितुं नव्यनैयायिकानां प्रयासो विज्ञानवादं प्रत्यासन्नीकरोति। ज्ञानविषययोः स्वाभाविकः संबन्धः समवायरीत्या न खल्वनुपपादनीयः।

ननु विषयताया नित्यत्वेऽतीतानागतसंयोगोपपत्तये नित्यसंयोगापत्तिरिति चेदाह दण्डना-शेऽपीति। मिश्रादीनां विषयताया ज्ञानजन्यत्वाभ्युपगमस्त्वभिव्यक्तिपरः। विषयतायाः मुख्यप्रकारा-नाह सा चेति। प्रकारता विशेषणता। तदवान्तरप्रकारचतुष्टयं सोदाहरणं विवृणोति आद्येति। आद्या प्रकारता बहुव्रीहिसमास्यान्यपदप्रधानत्वेन तत्र प्रतीयते। विशिष्टस्य वैशिष्ट्यं, विशिष्टे वैशिष्ट्यं, एकत्रोभयमिति प्रकारत्रयं स्पष्टम्।

**इति अर्कमाधुरीव्याख्यायां विषयतानिरूपणम्।**

---

# वैशिष्ट्याधिकारः

सांसर्गिकी **विषयतां** निरूपयति—**विशिष्टमपीति**। विशिष्टस्य वैशिष्ट्यमित्यर्थः विशिष्टद्रव्यत्वस्य तादृशद्रव्यनिष्ठसमवायस्वरूपत्वे पृथिव्यामपि जलभेदप्रतीत्यापत्तेर्नानतिरिक्तत्वमिति मतमाह **केचित्तु इति**। तन्मतं परमतोल्लेखेन खण्डयति **परेत्विति**। दण्डीति निश्चयेऽपि दण्डवैशिष्ट्यस्यातिरिक्तत्वेन दण्डे तत्सत्वसंशयो नासंभवी। स्वरूपसंबन्धाङ्गीकारे विशिष्टस्य नातिरिक्तत्वं तेन न संशयावकाश इति प्राच्यमतं नव्याः खण्डयन्ति **नव्यास्तु इति**। तथापत्त्या द्रव्यस्वरूपानतिरिक्तत्वप्रसक्त्या। यदा भूतले घटाभावः आसीत्पश्चाद्घटानयनं कृतं तदाऽतिरिक्ततत्संबन्धसत्त्वेन तस्य च नित्यत्वेन दोषप्रसक्तिरित्यर्थः उपसंहरति **अत इति**। समवायास्तत्तन्निरूपिता भिन्ना इति नव्यनैयायिकाः। अतएव वायौ रूपनिरूपितसमवायाभावान्न वायू रूपवानिति प्रतीत्यापत्तिः। अतो वैशिष्ट्यस्य नित्यत्वेऽपि विभिन्नत्वे न दोषः। एतदेव विवृणोति **तदेकत्व इति**। ननु वैशिष्ट्यस्य स्वरूपसंबन्धत्वपक्षेऽपि तत्तत्कालावच्छिन्नभूतलाभावयोः स्वीकारान्नाननुगतत्वदोषः पूर्वोक्तः प्रसज्यते नानात्वादिति चेदुच्यते **नेति**। नागृहीतविशेषणा विशेष्यधीः वाक्यावबोधाय प्रवर्तत इति न्यायेन कालरूपविशेषणस्वरूप एव संबन्धस्तस्तत्रापि तत्सूर्यपरिस्पन्दावच्छिन्नक्रियाणां विनिगमनाविरहान्नोपपत्तिरिति भावः।

**इति अर्कमाधुरीव्याख्यायां वैशिष्ट्यनिरूपणम्।**

---

## प्रतियोगिताधिकारः

प्रतियोगिताख्यपदार्थान्तरमभ्युपगच्छतां नवनैयायिकानां मतं पूर्वपक्षत्वेनोपन्यस्यति **प्रति-योगितापीति**। यो यस्याभावः स तस्य प्रतियोगीति नियमेन अभावनिरूपितप्रतियोगिता प्रतियोगिनि घटे वर्तते। सा च घटस्वरूपैव संवन्धरूपेति चेत्तत्राह **स्वरूपसंबन्धेनेति**। तत्कार्यस्य—'भूतले घटाभाव', इति व्यवहारस्य। अनिर्वाहमुपपादयति **घट इति**। प्रतियोगितासंबन्धस्य घटस्वरूपत्वे संवन्धस्य द्विष्ठत्वात् भूतले प्रतियोगितारूपेण घटस्यैवोपस्थितत्वात् तत्र घटाभावप्रतीतिर्न स्यात्। न हि प्रतियोगिसत्त्वे तदधिकरणेऽभावः प्रतीयते। अभावश्च तत्रास्त्यतो घटः प्रतियोगीति न युज्यते। घटस्य प्रतियोगिताश्रयत्वे 'घटोघटाश्रय' इत्यर्थः स्यात्स चासंभवी। न च सा भ्रान्तिः प्रतियोगीति प्रतीतेरबाधात्। ननु घटाश्रय इति घटरूपप्रतियोगिताश्रयः। अतएव घटः प्रतियोगीति युज्यत इति चेदाह **तस्या इति**। तर्हि घटनिष्ठो धर्मः प्रतियोगिता, स च घटत्वरूप एव। भूतलानुयोगिकाभावस्य घटनिष्ठायाः प्रतियोगितायाः घटत्वात्मकत्वे भूतलेन घटत्वस्य निरूप्यनिरूपकभावोऽपेक्षितः स च नोपपद्यतेति भावः ननु घटत्वस्यैव प्रतियोगितया व्यवहारोऽस्तु तात्पर्यतो तथैव ज्ञानादिति चेदाह **न चेति**। विलक्षणव्यवहारे विषयवैलक्षण्यज्ञानं कारणम्, अत एकेनैव घटत्वज्ञानेन कार्यतावच्छेदक जातिव्यवहारः अभावीयप्रतियोगिताव्यवहारश्च नोपपद्यते। ननु घटत्वं यद्यप्येकं तथापि व्यवहारानु-सारेण कदाचित् उभयप्रकारकज्ञानं जायते ज्ञानद्वयमेव विलक्षणोभयव्यवहारजनकमिति चेन्न; तथा सति अद्वैतिनामिव एकमात्रवस्तुना ज्ञानवैलक्षण्याङ्गीकारः, स्वसिद्धान्तहानिप्रसङ्गश्च इति। तेनाति-रिक्तप्रतियोगितापदार्थस्वीकारो न युक्तः। अपि चायं विचारः अभावस्य धर्म्यन्तरस्वीकार एव प्रसज्यते नैयायिकानाम्; **भट्टपादसिद्धान्ते** तु अभावस्य घटत्वादिवद्धर्ममात्रस्वीकारेण केवलं अभावविशिष्टघट एव प्रतीयते, तेन न प्रतियोगितादिप्रकारणां भिन्नत्वाभिन्नत्वचिन्तेत्यर्थः।

**इति अर्कमाधुरीव्याख्यायां प्रतियोगितानिरूपणम्।**

---

# साधर्म्यवैधर्म्याधिकारः

समानो धर्मः **साधर्म्यं**, वैधर्म्यं च विरुद्धो धर्मः। सर्वेषां पदार्थानां वाच्यत्वं वाचकशब्दः बोध्यत्वं, प्रमेयत्वं तथा संख्यावत्त्वं केवलान्वयिधर्मसाधर्म्यम्। ननु संख्या गुणः, गुणे गुणानङ्गीकाराच्च तत्प्रतीतिरेकाधिकरण्यसंबन्धेन न साक्षात्समवायेनेति चेदाह **स्वस्मिन्नपीति**। व्यवहारवत्तदनुसारी कोशोऽप्यत्र प्रमाणमित्याह **कोशश्चेति**। आदश-अष्टादशनवदशपर्यन्तं संख्याः संख्येयेषु लिङ्गत्रये। विंशत्याद्याः एकोनविंशातिमारभ्य सर्वा एकवचनान्ताः। लक्षणया 'गुणाः शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इतिवत् संख्येयपदार्थे तद्विशेषणत्वेन। संख्यार्थे संख्याविशेष्यत्वे एकद्विबहुत्वेषु संख्याः व्यवह्रियन्ते। तदेवाह षड्विंशती अनयोः पङ्क्तयः, षड्विंशतयः एषां पङ्क्तय इति समूहपरामर्शो भवति। भावानां सामान्याभावसहितानां भावत्वादिजातिमत्त्वं, तयोरपि सत्त्वप्रतीतेः पूर्वं निरूपितत्वात्। शक्तौ अनवस्थाभिया शक्त्यनङ्गीकारेण **शक्तिभिन्नानामिति**। अजसंयोगवत्त्वं शब्दश्रवणान्यथानुपपत्त्या दिग्वर्णयोः, ज्ञानानुभवप्रमाणेन चात्ममनसोः साधर्म्यं न कालाकाशयोः। तत्र तदभ्युपगमे प्रमाणाभावात्। रूपरसगन्धस्पर्शसंख्यागुरुत्वनैमित्तिकद्रवत्वादयः पृथिव्यां, ते सांसिद्धिकद्रवत्वयुताः गन्धशून्याः अप्सु इत्येवं ते ते असाधारणगुणाः तत्र तत्रोह्याः। ऐन्द्रियकत्वं इन्द्रियजन्यज्ञानयोग्यत्वं तच्च न मनसि अगोचरत्वेनानुमेयत्वात्। तत्तदैन्द्रियगुणा अपि न मनसि अतो मनोभिन्नानामिति। तेषामेव मनोभिन्नानाम्। वाय्वन्तानां पृथिव्यप्तेजोवायूनां मूर्तत्वं क्रियावत्त्वं च। सतमोवाय्वन्तभिन्नानां षण्णां आकाशादीनामपरिमितत्वम्। पृथिवीजलयोः रसवत्त्वं, द्रवत्ववत्त्वं, गुरुत्ववत्त्वं च साधर्म्यं ज्ञेयम्। अपि च 'यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तदि'त्यपि बोध्यम्॥

**इति श्रीभट्टनीलकण्ठभट्टकृतौ भाट्टार्केऽर्कमाधुर्यां**
**साधर्म्यवैधर्म्यनिरूपणम्।**

---

# अभावाधिकारः

**अभावत्वं** द्रव्याद्यष्टकान्योन्याभाववत्त्वम्। इह च द्रव्यत्वादि न प्रतियोगितावच्छेदकमननुगमात् किन्तु तद्गताष्टत्वसंख्यैव द्विप्रतीतियोगिकभेदस्य द्वित्वमिवेति वोध्यम्। स च 'भावान्तरमभावो हि' इति न्यायेन 'मात्रान्तरमभावो' हि कयाचित्तु व्यपेक्षया' इति वार्त्तिकेन घटत्ववत् घटस्य धर्मान्तरं न तु तार्किकवत् भिन्नो धर्मी। तत्र च **भट्टपादमिश्रयोः** संमतिमाह **न हीति**। तार्किकमतमुच्यते **नव्यास्त्विति**। अत्र भावभिन्नत्वं समवायसामानाधिकरण्यान्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपं तच्च पूर्वानुपस्थितमपि प्रकारः। एवं च घटाभावपटाभावप्रतीतीनामभावांशेऽनुगतत्वमुपपद्यतेऽनुयोगिताविशेषे तु न तथा। ननु जातीतरस्य सत्ताभावस्य स्वरूपतो भानासंभवेनाभावत्वेनैव प्रकार इत्यङ्गीकरणीयं, तथा चाभावप्रतीतौ विषयतान्त्यमिति चेन्न, सत्तात्यन्ताभावव्यक्तेः स्वरूपत एव प्रकारत्वोपगमात्। अत एव सत्तारूपप्रतियोगिज्ञानं विनापि घटो नास्तीति बुद्धौ स प्रकारः अभावत्वप्रकारकप्रत्यक्ष एव प्रतियोगिधियो हेतुत्वात्। अन्यथा 'इदं तम' इति प्रतीत्यनापत्तेः।

अधिकरणात्मकाभाववादिनां **प्राभाकराणां** मतं खण्डयितुमुपन्यस्यति **यत्तु इति**। **लाघवादिति**। अभावस्य पदार्थान्तरत्वं, तत्प्रकारा इत्यादि सर्वं मानाभावाद्गौरवम्। अतो गुरुमतेन तस्याधिकरणात्मकत्वं' भट्टमतेन च रूपादिवद्धर्मत्वस्वीकार इति। तत्खण्डयति **तन्नेति**। अभावानां तत्तदनन्ताधिकरणरूपापेक्षयातिरिक्तस्वीकारे एव लाघवं, प्रतीतिप्रमितत्वं च। विशदयति **अन्यथेति**। अभावस्याधिकरणात्मकत्वेऽभेदे भूतले घटाभाव इति आधाराधेयत्वं नोपपद्यते। नन्वभावाधिकरणकाभावस्याधिरमकत्वे यथाधाराधेयभावोपपत्तिस्तथा सर्वत्राप्यस्त्वित्यतो दूषणान्तरमाह **उपपन्नमिति**। अन्यथा गन्धरसस्पर्शानां प्रत्यक्षत्वं नोपपद्येत। येनेन्द्रियेणेति न्यायेने येनेन्द्रियेण यो गुणो गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते इति न्यायेन। गन्धाद्यधिकरणानामिन्द्रियविशेषैरग्राह्यत्वेऽपि च युज्यते गन्धाद्यभावानां प्रत्यक्षत्वम् गन्धाभावस्य जलादिरूपत्वेऽपि जलत्वादिनैव तेषां न घ्राणेन्द्रियग्राह्यता, गन्धाभावत्वेन तु तेषामपि तथात्वमिष्टमेव **प्राभाकराणाम्**। सौगतमतेनाभावं विवृणोति **एवमिति**। यस्मिन्काले भूतले घटाभाववत्त्वं, तत्कालोत्पन्नानि तद्भूतलविषयकाणि भूतले घटो नास्तीत्याकारकाणि, इदं भूतलमित्याद्याकारकाण्यपि वा ज्ञानान्येव भूतले घटो नास्तीति प्रतीतौ घटत्वविशिष्ट निरूपितानुयोगिताप्रकारेण भासन्त इति ज्ञानविशेषः। यस्मिन्काले भूतले घटो नास्ति तत्तत्काल एव भूतले घटो नास्तीत्यादिप्रतीतौ तादृशानुयोगिता प्रकारेण भासते इति कालविशेषो वाऽभावः।

**अखण्डोपाधिरिति** भावभिन्नत्वस्याभावत्वे भावत्वरूपविशेषणज्ञानशून्यकाले घटो नास्तीति प्रतीत्यनापत्तिः। एवमन्योन्याभावस्य लक्षणे तदात्म्यसंबन्धाविच्छन्नप्रतियोगिताकत्वमात्रस्यान्योन्याभावलक्षणत्वे घटत्वादौ घटत्वाभाववद्भेदरूपेऽतिव्याप्तिवारणायाभावत्वनिवेशस्यावश्यकत्वादन्योयाश्रयापत्तिः। एवमभावत्वस्य भावभिन्नत्वरूपत्वेऽभावो न भाव इति वाक्याच्छाब्दबोधानुपपत्तिश्च। उद्देश्यतावच्छेदक विधेययोरैक्यात्; अखण्डोपाधिरभावत्वमिति **परे**।

अभावो नाखण्डोपाधिरिति मतेन तद्भेदानाह **स चेति**। भूतले घट इत्यत्र संयोगादिसंसर्गः यदि प्रकारतया स्यात्तर्हि घटः पटसंसर्गो नेत्यत्र तदात्म्यमपि प्रकारत्वेनान्योन्याभावपात्तिरत आह **अत्र चेति**। संसर्गमर्यादिया संसर्गस्य प्रतीतिनियमे एतन्नियम इत्यस्यार्थः। अखण्डोपाधित्वे प्रमाणाभावाद्भेदभिन्नाभावत्वमेव संसर्गाभावत्वमस्तु, भेदलक्षणमाह **तादात्म्येति**। तथापि तादात्म्यप्रतियोगिता वच्छेदक संबन्धत्वमेव न प्रतीयतेऽतोऽन्योन्याभावत्वमखण्डोपाधिरिति। ननु उभयोर्मिलित्वाऽभाव त्वमेवाखण्डोपाधिरिति चेन्न; द्रव्यगुणादिभिन्नत्वमेवाभावत्वं नाखण्डोपाधिः। तत्र च नात्माश्रयः, भावभिन्नत्वविरहात्।

ध्वंसवारणाय **सान्तेति** प्रागभाववारणाय **जन्येति**। उभयोर्वारणाय **नित्येति**। कालविशेषविशिष्टस्वरूपस्य संसर्गत्वोपगमादेव घटवति घटो नास्तीति प्रतीत्यभावोपपत्तिः। एतादृशप्रतीत्युपपत्तिसंभवे अभावस्य दुरीयत्वस्वीकारोऽनुपपन्न इत्यस्वरसः अन्यमते सूचितः। उत्पन्नस्य पुनरुत्पादभिया, नष्टस्यतुपुनः प्रतीतिप्रसङ्गेन ध्वंसस्य च सिद्धि। तयोर्न संसर्गाभावत्वं सिध्यति, घटाभावध्वंसे प्रतियोगितावच्छेदकसंसर्गाभावादिति मतमाह—**घटाभावइति**। संसर्गाभावत्वं केवलमत्यन्ताभावस्यैवेति **नव्या**। तत्सामानाधिकरण्यविषये वैमत्यं दर्शयति—**समानधर्मेति**। ध्वंसप्रागभावाधिकरणे नात्यन्ताभाव स्तयोर्विरोधादिति प्राचां मतं, विरोधे मानाभावोऽन्यथा पूर्वमग्रेऽपि रक्ते मध्ये श्याम घटे रक्तं रूपं नास्तीति प्रत्ययस्तस्य सामान्यवगाहित्वात्। न चेदृशप्रयत्यो रक्तिमध्वंसाद्यवगाही पंचवर्णस्थले मध्ये रक्तेपि तादृशाकारप्रत्ययप्रसङ्गादिति।

**भाट्टैकदेशिनः भाट्टचिन्तामणिकाराः**। संसर्गाभावस्य न त्रैविध्यं किन्तु अत्यन्ताभावरूपमेव। तर्हि ध्वंसप्रागभावप्रतीत्योः कोपपत्तिरिति चेदाह **किन्तु इति**। यावत्पर्यन्तं न घटनाशस्तावत्कालः परत्वाश्रयस्तदनन्तरं मर्यादितत्वादपरत्वम। एवं घटोत्पत्तेः पूर्वं महान् कालः परत्वाश्रयस्तत्र प्रागभावव्यवहारः। तथापि सर्वदा नित्यात्यन्ताभावे सति भविता घटो, नष्टो वेति प्रतीतिः कथमुपपद्यते इति चेदाह **भवितेति**। घटवति घटसत्त्वेऽपि घटपटौ न स्तः इति व्यासज्यधर्मावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावो यथा तथैवाद्यक्षणे चरमो, चरमक्षणे च आद्यो नास्तीत्येवं तत्रात्यन्ताभाव उपपद्यते। भेदोऽप्येवमेव प्रतीतिर्ज्ञेयेत्याह **अन्योन्येति**। अव्यासज्यवृत्तिः—**एकैकमात्रवृत्तिरित्यर्थः**।

**इति श्रीभट्टनीलकण्ठप्रणीतभाट्टार्कव्याख्यायां अनन्तत्र्यंबककृतौ अर्कमाधुर्यामभाववादः ॥**

---

# मोक्षाधिकारः

**'सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः'** एतदनुसृत्य दार्शनिकमहर्षीणामपि 'मोक्षार्था दर्शनानां च विधीनां च प्रवृत्तयः' दृश्यते। 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरोत्तरापाये-तदनन्तरापायादपवर्ग, इति वैशेषिकसूत्रानुसारेण मिथ्याज्ञानतत्त्वज्ञानयोर्विरोधात्तत्त्वज्ञानार्थमेव सकलो यत्नः। तत्त्व भेदाच्च दर्शनभेदः। मोक्षस्वरूपे च तत एव वैविध्यमुपलभ्यते। तथाहि—स्वातन्त्र्यं मृत्युर्वा मोक्ष इति **चार्वाकाः**। आत्मोच्छेदो मोक्ष इति शून्यवादिनो माध्यमिकाः निर्मल-ज्ञानोदयो मोक्ष इतीतरे **बौद्धाः**। कर्मकृतस्य देहस्वरूपस्यावरणस्याभावे जीवस्य सततोर्ध्वगमनं मोक्ष इति **जैनाः**। सर्वकर्तृत्वव्यतिरिक्तानां सर्वज्ञत्वादीनां परमात्मगुणानां प्राप्तिर्याथात्म्येन भगव-त्स्वरूपानुभवश्च मोक्ष इति **रामनुजीयाः**। जगत्कर्तृत्वलक्ष्मीपतित्वश्रीवत्सप्राप्तिरहितं दुःखामिश्रितं पूर्णं सुखं मोक्ष इति **माध्वाः**। परमैश्वर्यप्राप्तिर्मोक्ष इति नकुलीशपाशुपताः। शिवत्वप्राप्तिरिति **शैवाः**। पूर्णात्मतालाभ इति प्रत्यभिज्ञावादिनः। पारदरसेन देहस्थैर्ये जीवन्मुक्तिरेव मोक्ष इति रसेश्वर-वादिनः। अशेषविशेषगुणोच्छेदो मोक्ष इति **वैशेषिकाः**। आत्यन्तिकी दुःखनिवृत्तिरिति **नैयायिकाः**। **नैयायिकैकदेशिनस्तु** न तत्र केवला दुःखनिवृत्तिः किं तु सुखमप्यस्तीत्याहुः। मोक्षविषये मीमांसकमतं अस्मिन्नेवाधिकारे स्पष्टीभविष्यति। तत्रापि स्वर्गप्राप्तिर्मोक्ष इति स्थूलदर्शिमतम् मूल चक्रस्थायाः परानामिकायाः ब्रह्मस्वरूपाया वाचो दर्शनं मोक्ष इति **पाणिनीयाः**। प्रकृत्युपरमे पुरुषस्य स्वरूपेणा-वस्थानं मोक्ष इति **सांख्याः**। कृतकर्तव्यता पुरुषार्थशून्यानां सत्त्वरजस्तमसां मूलप्रकृतावत्यन्तलयः प्रकृतेर्मोक्षः। चितिशक्तेस्तु निरुपाधिकस्वरूपेणावस्थानं मोक्ष इति **पातञ्जलाः**। मूलज्ञाननिवृत्तौ स्व-स्वरूपाधिगमो मोक्ष **इत्यद्वैतवेदान्तिनः**।

**तत्रेदं अद्वैतमतं** स्वयं भ्रमाधिष्ठितं, जगन्मिथ्यात्वप्रतिपादकं; सर्वत्र श्रौतत्वप्रसिध्या वास्तविकश्रौतमीमांसकसिद्धान्ते विपर्यासादि जनयितुं समर्थम् तथा स्वयं औपचारिकश्रुत्यधि-ष्ठितमपि मुख्यार्थश्रुतिसिद्धाभिधेयमीमांसकासिद्धान्तमन्यथाज्ञापयितुं शक्तं मा सिध्यतु इति मनसि कृत्य प्रधानमल्लनिर्बहणन्यायेन तदभिमतमोक्षाधिष्ठा न श्रुतीनामाचार्याभिप्रयेण सुयोग्यता-त्पर्यप्रतिपादनद्वारोपपत्तिनिरूपणायावतारयति **सत्त्विति**। स्वप्नः प्रबोधेन नश्यति एवं अनादिकाल-प्रवृत्ताविद्यकदीर्घनिद्रायां नानाभेदभिन्नजगत्प्रपञ्चभानं एकाद्वितीयसत्यज्ञानानन्दस्वरूपब्रह्मतत्त्वज्ञा-नेन शोकमोहादिदुःखादिविलाससहितं निवर्तते। श्रुत्यादयोऽनुभावादयश्चात्र प्रमाणम् इति अद्वैत-वेदान्तिमतं सार्वजनीनानुभवविरोधिस्वान्तोपपद्यत इत्याह **तन्नेति**। ननु मोक्षावस्थावर्णनं श्रुत्या यथा कृतं तथाऽवश्यमङ्गीकर्तव्यं तावत्पर्यन्तं तु सार्वजनानुभवः व्यवहारिकसत्य एवेति चेन्न। सत्ये प्रकाशसंभवात्। किं च श्रुत्यास्तात्पर्यमपि प्रपञ्चसत्वे एव न तदपलापे इति श्रुतिविनियोगपूर्वकं साधयति **द्वैतमिवेति**। मुमुक्षोः मोक्षेच्छाजनकाय विषयवैराग्यप्राप्तये च द्वैतप्रपञ्चस्य भानं स्वप्नेन्द्रजालवत् इति भ्रान्ति-प्रतिपादनं, न वस्तुतया। 'आत्मैवेदं' इत्यादि तु मोक्षदशायां आत्मनः प्रपञ्चसंबन्धनिराकरणायैव न

तु तदा वास्तविकप्रपञ्चाभावे श्रुतितात्पर्यम् । स्वयंदासेषु तपस्विषु यथा भेदाधिष्ठितस्वामिभृत्यभाव औपचारिक एवं केन दर्शनसाधनेन कं दर्शनीयं पश्येदात्ममात्रस्थितौ, यत्रेत्यादिश्रुत्युपपत्तिः ।

ननु प्रौढिवादेनैतादृशोपपत्तावङ्गीकृतायामपि

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।

इति षड्विधतात्पर्यलिङ्गसिद्धं आत्मनो व्यापकत्वं एकमात्रत्वं न केनापि अन्यथोपपादयितुं शक्यम्; विशेषतस्तु श्रौतदार्शनिकैः । 'नेह नानास्ति किंचन' इत्यादि श्रुतौ च प्रपञ्चस्यार्धजरतीयन्यायेन संबन्धविरहप्रतिपादनमात्रं निःपक्षपातिभिर्विपश्चिपमैरिति चेत्तत्राह-**यत्तु इति** । 'एक एवाकाश' एकमेवाद्वितीयं ब्रह्म' इत्युभयोर्वाक्ययोर्वाक्याशास्त्रज्ञैः व्यापकत्वं-सजातीयान्यपदार्थशून्यत्वमेवार्थः, नान्यः संभवति आकाशस्येव ब्रह्मणोऽपि इत्येवानुमन्येत । तात्पर्यबोधकलिङ्गान्यपि नान्यत्प्रतिपादयितुं शक्नुवन्ति । नेह नानास्ति किंचन' इत्यत्रापि नानापदस्य सजातीयविजातीयपदार्थविरह एव प्रतिपाद्यार्थः । न घटादिसत्ताविरहे तत्तात्पर्यम् अत्र दृष्टान्तद्वारोपपादयति **अत एवेति** ।

तेनेह गिरापदगीतेरिरापदे स्थानापत्त्या प्राप्ति वक्तुं स्थानापत्तिमेव चिन्तयति-ज्योतिष्टोमे यज्ञायज्ञीये श्रूयते 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमिति, किमिरापदस्य गिरापदस्थानापत्तिः पाक्षिकी गिरापदमिरापदं वा प्रयोक्तव्यम् ? उत नियता स्थानापत्तिरिरापदमेव प्रयोव्यक्तमिति । तत्रेरापदमात्रं वचनेन विधीयते, नोद्गानसंबन्धः स्तोत्रसंबन्धो वा । प्रकरणात्तु स्तोत्राङ्गता भवति, तदङ्गभूतस्य च तत्साधनभूतयज्ञायज्ञीयगानसंबन्धः प्राप्त एवानूद्यते, ततश्च काल्पनिकमेव स्तोत्राङ्गत्वं गानसम्बन्धश्च । गिरापदस्य चास्त्येव काल्पनिकमङ्गत्वमित्यविशेषादुभयोर्विकल्पः ।

नैतदेवम्; इरापदस्य हि प्रकरणसनाथया श्रुत्याऽग्निष्टोमस्तोत्रसाधनाभूताद्गानसंबन्धित्वेन विधीयमानस्य श्रुत्या गानसम्बन्धः प्रकरणाच्च स्तोत्राङ्गत्वं; गिरापदस्य प्रगाढैकवाक्यतया गानसंबन्धः स्यात्, क्रमाच्च स्तोत्राङ्गत्वं, स्तोत्रक्रमेण हि ज्योतिष्टोमप्रकरणे पाठ्यमानासु ऋक्षु यज्ञायज्ञीयप्रगाथोऽग्निष्टोमस्तोत्रक्रमे पठ्यते, इति तदेकदेशस्य गिरापदस्यापि क्रमात्तदङ्गत्वं; क्रमाच्च प्रकरणं बलीयः श्रुतिश्च वाक्याद्बलीयसी, अपि च गिरापदस्याम्नानमात्रं न विधिः, इरापदं तु प्रत्यक्षविहितं, अतोऽपि बलवत् । ननु च यज्ञायज्ञीयेन स्तुवीतेति प्रत्यक्षमेव यज्ञायज्ञीयं स्तोत्राङ्गत्वेन विहितं, सत्यं; साम्नः प्रत्यक्षं ऋचस्त्वनुपपत्त्या कल्प्यम् । एतदेव हि साम्नः स्तुतिसाधनत्वं यद्गुणाभिधानपराणामृगक्षराणामभिव्यक्तः । अतो यज्ञायज्ञीयेन स्तुवीतेत्यस्यायमर्थः ।

यज्ञायज्ञीयाभिव्यक्तैर्ऋगक्षरैः स्वतुवीतेति, तत्रापि सामाम्नानसिद्धाक्षराभिव्यक्तिरेव सति संभवेऽङ्गीकरणीया नान्यकल्पनं युक्तमिति यज्ञायज्ञीयप्रगाढस्यैवायं स्तुतौ विनियोग इति प्रकल्प्यते, तत्रापि साधारण्येन सर्वपदानां विनियोगो न विशेषतो गिरापदस्यैव, इरापदस्य तु साक्षाद्विशेषरूपेण साक्षादिनियोग इति बलवत्ता ।

अत्र मुक्तावस्थायां नानाभेदप्रपञ्चो नास्तीत्यर्थे न निषेधे तात्पर्यम् न हि तत्र घटाभावः प्रतीयते । प्रसज्यप्रतिषेधे प्रतियोगिप्रसक्तिरपेक्षिता । यद्यत्र घटादिः स्यात्तन्निषेधेन घटाभावः प्रतीयेत ।

तेन नात्र प्रपञ्चनिषेधोऽपि तु 'न गिरा' इत्यधिकरणोपदर्शितरीत्या मुख्यार्थासंभवेन सजातीयभाव-रूपार्थानुवाद एव निष्कृष्टार्थः ।

अत एव-विज्ञानात्मनः भिन्नत्वादेव न जीवब्रह्मात्मैक्यं शङ्क्यम् । नित्यं विज्ञानमानन्दं ब्रह्मेति वाक्यस्योपपत्तिः आत्मवादे पूर्वमुपदर्शितैव । ननु आनन्दपदं नपुंसकं ब्रह्मपरमेव, तेन तदैक्यमेव निश्चीयत इति चेन्न; यद्यपि आनन्दशब्दः कोशादौ पुंलिंगस्तथापि 'अर्श आदिभ्योऽच्' इति मत्वर्थीयः । तेन नपुंसकत्वं संगच्छते जीवस्य । तेन जीवात्मपरत्वं तस्य वचनस्य सिध्यति ।

ननु अलौकिकेऽर्थे न प्रत्यक्षप्रमाणं प्रभवति, लौकिकप्रपञ्च एव तद्विषयस्तेन अत्र श्रुतिरेव बलीयसीति चेदाह—तथा सति द्वैतप्रतिबन्धकश्रुतिवत्प्रत्यक्षबाधिताः सर्वा अर्थवाद श्रुतयः मुख्यार्थे प्रमाणं भवेयुः 'ग्रावणः प्लवन्त' इत्याद्या । तथा च सति त्वयैव त्वदभिमत सिद्धान्तभङ्गः कृतः स्यात् । अर्थवादविषये 'विरोधे गुणवाद' इत्यादिकारिकया गौणीक्षणास्वीकारस्तव, स नोपपद्येत । कारिकार्थं विशदयति **अवधारित इत्यादिना** ।

**अद्वैतवेदान्तिनः सर्वे** भगवत्पूज्यपाद श्रीशंकराचार्यानुयायिनः तथापि केचित् जीवात्मैक्य-वादिनः केचित् अतात्त्विकभेदमङ्गीकृत्य जीवात्मभेदाङ्गीकर्तारः परे अखण्डाविद्यासमर्थकाः अपरे त्वौपाधिकभेदाङ्गीकारेण प्रतिजीवं भिन्नाऽविद्येति मन्तारः, तथापि मोक्षविषये ब्रह्मतत्त्वज्ञानेनाविद्या-निवृत्तिमङ्गीकुर्वन्ति ते सर्वे ऐक्यमतेन । अविद्या विलासशोकमोहदुःखादीनामात्यन्तिकनिवृत्तिपूर्वकं श्रुत्यनुसारं नित्यज्ञानसुखाविर्भाव एव मोक्ष इति सर्वसंमतं अविवादं तन्मतं, तच्च **भट्टपादसंप्रदाया-नुसारेण** नाविगीतं. दोष बाहुल्यादित्याह **किञ्चेति** । अविद्यैक्ये एकाविद्यानाशे सर्वभुक्त्यापत्तिः तत्परिहारायाविद्याभेदाङ्गीकारेऽपि आत्मैक्यस्वीकारेण 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायेन तद्दोषतादवस्थ्यम् । शुकवामदेवादीनां आमुक्त्यापत्तिश्च । एतद्दोषशान्त्यै जीवात्मनामतात्त्विको भेदोऽस्तु इति चेदाह—**अतात्त्विकेति** । तात्त्विकजीवभेदाङ्गीकारे नित्यविज्ञानसुखात्मबोधकश्रुत्यनुप-पत्तिः । भेदानुभवाच्च ज्ञानविषये जानामी ज्ञास्यामीत्यादि । सन्तु तर्ह्यमुक्ता एव शुकवामदेवादयः इति चेन्न; तन्मुक्तिबोधिकायाः 'शुको मुक्त वामदेवो मुक्त' इति श्रुतेरप्रामाण्यप्रसङ्गात् । सर्वमुक्तौ तन्मुक्त्युक्तिस्तु न; जीवात्मनामानन्त्यात् । आनन्त्येऽपि क्रमेण तन्मुक्त्युपपत्तिस्तु कालस्यानन्तत्वेनान्ता-संभवेनानुपपन्ना ।

**माध्यमिकमतेन मोक्षस्वरूपं** दर्शयति **दीपसन्तानस्यैवेति** । नीलपीतादिज्ञानस्यात्मस्वरूपत्वा-त्तादृशज्ञानसन्तत्युच्छेद एव मोक्षः । यावज्जीवं यत्किंचिज्ज्ञानं नीलरूपेण पीतरूपेण घटादिरूपेण-वा यत्प्रतीयते तदेव जीवनं, तदेव च आत्मस्वरूपम् । तादृशात्मोच्छेद एव मोक्ष इति शून्यवादिमतं वार्तिके **भट्टपादैरपास्तम्** । अपरे विज्ञानवादिप्रभृतिक्षणिकवादिबौद्धास्तु आत्मा शुद्ध आलयविज्ञानरूपः तत्रानादिवासनावासितत्वान्नीलपीतादि क्षणिकज्ञानानि उत्पद्यन्ते विनश्यन्ति च । तादृशवासनोच्छेदेन निर्मलज्ञानस्वरूपेणात्मावस्थानं मोक्षस्वरूपमिति मन्यन्ते तेषामपि निरसनं जिज्ञासुभिर्वार्तिके एव द्रष्टव्यम् ।

**वार्तिककारमतेन मोक्षस्वरूपं** परिष्करोति **तस्मादिति** । दुःखनिवृत्तेरात्यन्तिकत्वं किमित्य-पेक्षायामाह **दुःखेत्यादि** । पुनर्यदि दुःखसंभवः स्यात्तर्हि तादृशदुःखनिवृत्तेः दुःखप्रागभावसमानकालि-कत्वं स्यात्तन्निवृत्त्यर्थं दुःखप्रागभावासमानेति आगामिदुःखाभावनिदर्शनार्थम् । निवृत्ते बाधित्वे भ्रमज्ञान

बाधकरज्ज्वादिज्ञानोत्पत्तावपि कदाचित्पुनर्भ्रमभाससंभवो भवति तथा दुःखबाधेऽपि स्यादतः स्पष्टयति—निवृत्तिर्ध्वंस इति नैयायिकमते विशेषगुणानां त्रिक्षणावस्थायित्वात् चरमदुःखद्वितीयक्षणे दुःखप्रागभावासमानकालिकप्रथमक्षणीयायाः दुःखनिवृत्तेर्वर्तमानत्वात् तत्र मोक्षत्वक्षणातिव्याप्तिस्तद्वारणायाहुः केचित् दुःखसमानेत्यादि ।

तच्च न युक्तं, दुःखनिवृत्तेर्दुःखत्वावच्छिन्नप्रतियोगिताकत्वविवक्षणेनैव चरमदुःखद्वितीयक्षणे तादृशातिव्याप्तिवारणसंभवात् । ननु अवच्छेदकावच्छेदेनाभावविवक्षायां घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वं अत्यन्ताभाव एव संभवति न प्रागभाव—ध्वंसयोः इति नियमेन, अत्र 'निवृत्तिर्ध्वंस' इति प्रतिपादितत्वात्तत्र दुःखत्वावच्छिन्न प्रतियोगिताकत्वासंभव इति चेत्सत्यम्; तथापि श्रुत्यादौ यावद्दुःखनिवृत्तेर्वर्णनात्तादृशमङ्गीकार्यम् । दोषनिवारणयैतदपेक्षितमेवेत्याह **अवश्यमिति** । अथवा नैयायिकादिमते संसारस्यानाद्यनन्तत्वात् मोक्षकालेपि आगामिसृष्टेः प्रागभावाः, अतीतप्रपञ्चध्वंसाश्च वर्तन्ते तेन पूर्वोक्तलक्षणासंभव एवापतेत् इत्यतः आत्यन्तिकत्वस्य निष्कृष्टं लक्षणमाह **स्वाश्रयेति** । स्वाश्रयः मुमुक्षोरात्मा तत्समवेतं दुःखं तत्समवेतः क्षणः बन्धक्षणः तदवृत्तित्वं दुःखनिवृत्तेरात्यन्तिकत्वमि यर्थः ।

मीमांसकानां स्वर्ग एव मोक्ष इति म० म० सर्वदर्शनटीकाकृतां मतम् उदयनाचार्यैश्च नित्यसुखाभिव्यक्ति र्मुक्तिरिति परामृष्टं स्वग्रन्थे तौतातिकमतम् । तत्खण्डयति **तद्वार्तिकादर्शननिबन्धनमिति** किं तद्वार्तिकमित्यपेक्षायामाह **यदाहुरिति** ।

मोक्षो यदि निरतिशयसुखोपभोगरूपः स्यात्—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ।। इति

पूर्वं सुखाधिकारे निरूपितस्वर्गरूप एव स्यात् न च स मीमांसकाभिमतमोक्षः । कुत इति चेदाह **पर्यायेण क्षयी च सः इति** । 'क्षीणे पुण्ये मर्त्यलोकं विशन्ती'ति न्यायेन विनाशदर्शनात् । तर्हि स्वाराज्यादिवाजपेयादिभिरिह यागादिफलरूपमविनाशि स्यादित्याशङ्कायामाह **न हीति** । उत्पाद्याप्य-संस्कार्य विकार्यरूपं यद्यज्जन्यं तत्सर्वं विनाश्येव न नित्यमिति भावः । अभावात्मकत्वमेव मोक्षस्य मीमांसकानामभिप्रेतं, नचात्यन्तिक दुःखनिवृत्तिरूपं पूर्वमेवोक्तम् ।

अत्र पूर्वमीमांसायां दुःखनिवृत्तिरूपमोक्षपूर्वभागस्यैव मोक्षत्वम् । उत्तरमीमांसा तु वेदानां अन्तो निर्णयो यत्रैतादृशी, तत्र दुःखनिवृत्रिपूर्वकं नित्यात्मसुखाविर्भाव एव मोक्षस्वरूपं पूर्णमिति निर्दिष्टम् । तच्च सुखं न जन्यं किंतु स्वरूपभूतम् आत्मज्ञानेनाविर्भूतं । न जन्यमत एव न विनाशि तदेव मोक्षस्वरूपं वेदान्तैस्तात्पर्यरूपेण साधितमवश्यविचार्यम् ।

शास्त्रं वैदिकमीमांसा यज्ञो नारायणः स्वयम् ।
आचार्या भट्टपादाश्च सन्तु मे जन्मसार्थकाः ।।

**इति श्रीभट्टनीलकण्ठभाट्टार्कस्य अनन्तत्र्यंबकपिंगलेशास्त्रिप्रणीतार्कमाधुरी-व्याख्यायां मोक्षनिरूपणम् ।**

**॥ समाप्ता चेयं व्याख्या ॥**

---

## मूलग्रन्थपाठस्य शुद्धिपत्रम्

| पृष्ठ | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ६ | त्रुटिःस मवेतः | त्रुटिः समवेतः |
| ९ | ४ | नत्वाग्नि | नत्वग्नि |
| ९ | ९ | व्यभिचारापत्तेर्जलद्रवत्वे | व्यभिचारापत्तेः, जलद्रवत्वे |
| ९ | १४ | जनकरयापि | जनकस्यापि |
| १० | ११ | असमवायित्वभेव | असमवायित्वमेव |
| १२ | २६ | साधिनश्च | साधितश्च |
| १३ | ६ | क्षणदयो | क्षणादयो |
| १४ | ११ | रवं ब्रम्ह | खं ब्रह्म |
| १४ | १५,१६ | गुणवत्वम् | गुणवत्त्वम् |
| १५ | १२ | सद्योजातास्य | सद्योजातस्य |
| १५ | १३ | अन्या स्मृतिस्तु | अन्यास्मृतिस्तु |
| १५ | १७ | कर्तृत्वेनैर्घृण्यापत्तेः | कर्तृत्वे नैर्घृण्यापत्तेः |
| १५ | २२ | प्रयुक्तम् | प्रत्युक्तम् |
| १५ | २४ | अनित्वयत्वनियमाश्च | अनित्यत्वनियमाच्च |
| १६ | ६ | विरहान् | विरहात् |
| १७ | ९ | एवमुच्यते | एव । मुच्यते |
| १७ | १३ | सरूपां | सरूपाम् |
| १७ | १८ | भेदाग्राहात् | भेदाग्रहात् |
| १९ | १ | सत्प्रतिपक्षसंभाच्च | सत्प्रतिपक्षसंभवाच्च |
| १९ | २५,२६ | एव ञ्च, विस्तृत श्च | एवञ्च, विस्तृतश्च |
| २० | १६ | दोषायत्तत्वादभावान् | दोषायत्तत्वात्तदभावान् |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२ | १ | अभ्यतमात्कं | अन्यतमात्मकं |
| २२ | ३ | झटिति | झटिति |
| २२ | ३ | स्तैजसमेव | तैजसमेव |
| २३ | ४ | तेनेयं | तेनाऽयम् |
| २३ | १८ | गुणत्वमाश्रयकल्पकं चेन्न | गुणत्वमाश्रयकल्पकमिति चेन्न |
| २४ | ६ | समुचितानां | समुच्चितानाम् |
| २४ | १३ | तेजः संसर्गभाव | तेजःसंसर्गाभाव |
| २४ | २१ | तमासो | तमसो |
| २५ | ९ | गुणाक्रिया | गुणक्रिया |
| २५ | १६ | वाखादि | वाय्वादि |
| २६ | १२ | कार्याता | कार्यता |
| २८ | १५ | गृह्यने | गृह्यते |
| २८ | १६ | पदार्थत्ववद्रप | पदार्थत्ववद्रूप |
| २८ | १९ | जातिसिद्ध | जातिसिद्धि |
| ३० | ६ | कटुल | कटुक |
| ३१ | १७ | प्रत्यभिज्ञादनन्त | प्रत्यभिज्ञानादनन्त |
| ३१ | १९ | तदन्तर्गतैर्वल्ले: | तदन्तर्गतैर्वह्नेः |
| ३२ | ८ | त्रुटावयत्र | त्रुटावयव |
| ३३ | ९ | उभायात्रापि | उभयत्रापि |
| ३४ | १८ | निःप्रतियोगिक | निष्प्रतियोगिक |
| ३४ | ३६ | °रेका यत्वा | रेकाश्रयत्वा |
| ३५ | ८ | पृष्ठादारोपित | पृष्ठारोपित |
| ३५ | २४ | अधिकाधिका मतिसिद्धेः | अधिकाधिकमतिसिद्धेः |
| ३६ | २ | दुर्गन्धप्रपत्तीकार | दुर्गन्धप्रतीकार |
| ३६ | १४ | नादनाद् | नोदनात् |
| ३७ | ९ | ज्ञानधिकरः | ज्ञानाधिकारः |
| ३७ | २० | ज्ञानादतिरच्यते | ज्ञानादतिरिच्यते |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३८ | १२ | पारदुःख | परदुःख |
| ३९ | ७ | हेतु | हेतुः |
| ३९ | १७ | घटात्पट | घटात्पटौ |
| ३९ | २१ | पृथगित | पृथगिति |
| ४२ | १५ | प्रत्यभिक्षाहेतुत्वं | प्रत्यभिज्ञाहेतुत्वं |
| ४४ | २३ | समुपतिष्ठन्त | समुत्तिष्ठन्त |
| ४४ | २४ | विजिघित्सः | विजिघत्सः |
| ४४ | २६ | पूर्वोद्धाव्याप्तेः | पूर्वेण्ग्रावव्याप्तेः (?) |
| ४५ | २८ | दग्धेन्द्रिय | दध्नेन्द्रिय |
| ४६ | ४ | सम्बन्धिकं | ससम्बन्धिकं |
| ४६ | १५ | चित्रं गोदाहनादीनां | चित्रं गोदोहनादीनाम् |
| ४७ | ३ | वाह्योन्द्रिय | बाह्येन्द्रिय |
| ४७ | २२ | नाश | नाशः |
| ४८ | ९ | अनुत्पतिः | अनुत्पत्तिः |
| ४९ | १६ | कृत्यधिकरणे | आकृत्यधिकरणे |
| ४९ | १० | प्रक्षेपोऽप्रक्षेपण | प्रक्षेपोऽपक्षेपण |
| ४९ | १५ | कारत्वम् | कारणत्वम् |
| ४९ | १६ | क्रियात्ववान्तर | क्रियात्वावान्तर |
| ४९ | १६ | कृत्यधिकरणे | आकृत्यधिकरणे |
| ५० | ८ | ज्ञानविषयतात्पर्याप्त्य | ज्ञानविषता पर्याप्त्य |
| ५२ | १५ | परितोपाल् | परितोषाल् |
| ५२ | २४ | अन्याग्राह | अन्याग्रह |
| ५२ | २५ | गोत्वमनुपलब्ध्वा | गोत्वमनुपलब्ध्या |
| ५५ | २४ | पचमे | पंचमं |
| ५६ | ६ | गौरवं | गौरवम् |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६ | ७ | ब्राह्यण्य | ब्राह्मण्य |
| ५६ | ९ | त्वामाश्रयः | त्वात्माश्रयः |
| ५६ | २० | भ्रमप्राप्तिनिवेधेऽपि | भ्रमप्रप्तिनिषेधेऽपि |
| ५६ | २७ | ब्राह्यण्य | ब्राह्मण्य |
| ५७ | ७ | बालकः | बाधकः |
| ५८ | २ | तदाभावसामाना | तदभावसमाना |
| ५८ | २५ | सर्वज्ञना | सर्वजना |
| ५९ | १० | ज्ञानमात्रं | ज्ञानमात्रे |
| ६१ | १२ | अपगता | अवगता |
| ६१ | १७ | द्व्यासक्त | द्रव्यासक्त |
| ६२ | १० | अभिन्त्रित | अभिमन्त्रित |
| ६३ | पुष्पिकायाम् | संकरभट्ट॰ | शंकरभट्ट |
| ६४ | १० | अभिप्रयायेण | अभिप्रायेण |
| ६५ | ११ | सोमदिष्वाङ्ग | सोमादिष्वङ्ग |
| ६६ | १७ | कुण्उली | कुण्डली |
| ६७ | ४ | ष्टथिव्याम् | पृथिव्याम् |
| ७१ | १ | एतन्मतेनाभाव | एतन्मते नाभाव |
| ७१ | १५ | लीने | लीनो |
| ७२ | ९ | संगच्लने | संगच्छते |
| ७३ | १८ | सिद्धः घट | सिद्धघट |
| ७४ | १ | तोतातित | तौतातिक |

( एतच्छुद्धिपत्रं श्रीमता रङ्गनाथाचार्य-
महोदयेन विनिर्मितम् )

—०००—

